# सम्भाषण-सन्देशः

फाल्गुनमासः मार्च १९९६ रू. ५/-

## भारतस्य वैज्ञानिकपरम्परा



पश्चिमे जातः अपश्चिमः डेविड् फ्राली



↑अजितश्री-प्रवेशोत्सवसमारम्भे भाषमाणः रा. स्व. सङ्घस्य सरकार्यवाहः हो. वे. शेषाद्रिः । प्रतिष्ठानस्य निर्देशकः दिनेशकामतः, प्रवेशोत्सवसमितेः कार्याध्यक्षः देवताराधाकृष्णः, गौरवाध्यक्षः न्यायमूर्तिः डि. एम्. चन्द्रशेखरः, कुलपतयः पेजावरविश्वेशतीर्थाः, राजकुमारी अग्रवाल् च मञ्चे दृश्यन्ते ।

'सुशीलगृहप्रशस्तिं' वितरन्ती राजकुमारी अग्रवाल् । प्रशस्तिभाजौ बालकृष्णदम्पती, सेवाप्रमुखः सीतारामकेदिलायः च↓ दृश्यन्ते ।



सम्पुटः - २
सञ्चिका - ७

सम्भाषण सन्देशः
मासपत्रिका युव सं।। फाल्गुनमासः मार्च् - १९९६

सम्पादकः -
जनार्दनहेगडे

उपसम्पादकः -
विश्वासः

प्रकाशकः -
के. नारायणः

विषयपरामर्शकाः -
विद्वान् न. रङ्गनाथशर्मा
विद्वान् नु. ति.श्रीनिवासैय्यङ्गार्यः
मा. गोपालकण्णन्

व्यवस्थापरामर्शकाः -
दिनेश कामतः, बेङ्गलूरु
डा. श्रीनिवास न. पडियारः, कुन्दापुरम्
ना. रा. कुमारः, मद्रास्

प्रबन्धकः -
नागराजः

मुखपुटविन्यासकारः -
विजेता

कलाकाराः -
महेन्द्रः
नागराजः
सु.वि. मूर्तिः
लिङ्गदेवरु

## सन्देशसारः

पृ. सं.



'अक्षरम्', ८ उपमार्गः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५
दूरवाणी - ६६१७२७६/६६१३०५२

वार्षिकं ग्राहकशुल्कं -
रू. ६०-००

# प्रतिक्रिया




फेब्रवरीमासस्य 'सम्भाषणसन्देशः' अतीवसुन्दरः अस्ति । तत्र प्रज्ञाभारत्याः डॉ॰ श्री. भा. वर्णेकरमहोदयस्य विषये लेखं दृष्ट्वा पठित्वा च अहं बहु प्रमुदिता अभवम् । वार्धके अपि तस्य कार्योत्साहः किञ्चिदपि न क्षीणः इति तु आश्चर्यजनकम् एव । 'श्रीवाण्यल्यङ्करण'-पुरस्कृतस्य तस्य अभिनन्दनानि ।

● **अमृता** *नागपुरम्*

फेब्रवरीसञ्चिकायाः सन्देशे विषयाः कुतूहलजनकाः आसन् । 'संस्कृतवाङ्मये विश्वजनीना लौकिकदृष्टिः'-नामकः लेखः अत्यन्तम् उपयोगी अस्ति । संस्कृतभाषाविषये दुरभिप्रायर्वद्भिः अवश्यं पठनीयः एषः लेखः ।

जगत्कारणनामक-कथायां कणादस्य सिद्धान्तः न तावत् स्पष्टतया प्रतिपादितः इति मन्ये ।

● **वेम्पराल सुब्बारावः** *राजमण्ड्री (आ.प्र.)*

शर्मणा रङ्गनाथेन लिखितं लेखनं पुनः ।
पठित्वा तृप्तिमाप्नोमि सर्ववाङ्मयवर्णनम् ॥

● **एन्. पार्वती** *कण्णूर (केरलम्)*

उत्तमः लेखः वि. रङ्गनाथशर्मणा प्रदत्तः । लोकहितं साधयितुं संस्कृतं कथं समर्थम् इति अस्मिन् लेखे सप्रमाणं प्रतिपादितम् अस्ति । सङ्ग्रहयोग्यः लेखः ।

● **कोक्कडवेङ्कटरमणभट्टः** *मण्ड्य*

'जगत्कारणम्' इति कथां पठित्वा प्रमोदं प्राप्तवान् अस्मि । जगतः सृष्टेः मूलकारणं विभिन्नकणानां संयोगः एव इति कणादः बहुकालात् प्रागेव समीचीनतया प्रमाणीकृतवान् आसीत् । चैतन्यस्य कणस्य च सम्मिलनम् एव जीवाङ्गस्य (Organism) हेतुः इत्यपि तेन विदितम् आसीत् ।

पाश्चात्यानाम् आधुनिकसिद्धान्तस्य अनुसारं सृष्टेः निर्माणस्य परमाणवः एव इष्टिकाः इति निर्धारितम् अस्ति । परन्तु चैतन्यम् अधिकृत्य किमपि न निरूपयति भौतिकविज्ञानम् । आधुनिकसंशोधनम् अपि चैतन्यं वा आत्मानं वा अधिकृत्य किमपि न ज्ञापयति इति विषीदामि अहम् ।

● **सि. विठ्ठलदासः** *मङ्गलूरु*

'सत्त्ववान् मार्गदर्शी' कथा मह्यं नितराम् अरोचत ।

● **प्रभावती ए.जी.** *मण्ड्य*

विदुषां रङ्गनाथशर्मणां ''संस्कृतवाङ्मये विश्वजनीना लौकिकदृष्टिः'' इति लेखनं पठित्वा रोमाञ्चः अभवत् । एतादृशाः विद्वत्तल्लजाः अस्मिन् देशे विराजन्ते इति तु प्रमोदस्य स्थानम् ।

सन्देशे भावचित्राणि मशीमग्नानि भवन्ति । अतः दोषपरिमार्जने यत्नः क्रियताम् ।

● **एम्. सुब्रह्मण्यभट्टः** *बीरुरु*

पत्रिका मनोज्ञा बोधपूर्णा च अस्ति । लेखाः ललिताः आसक्तिपूर्णाः च सन्ति ।

जनवरीमासे डॉ॰ अम्बटी विषये प्रकटितं लेखनम् एकेन एव दृष्टिकोणेन लिखितम्, ततः दोषपूरितम् इति मम मतम् । एतादृशेषु गणराज्येषु नागरिकाणां कनिष्ठतमअधिकाराः सन्ति । यावत् अपराधनिर्णयः न भवति, तावत् आरोपी अपराधी इनि न गण्यते । अम्बटीपरिवारस्य दोषनिर्णयः न्यायालये एव भवतु । तदनन्तरमेव वयं सर्वे निर्णयस्य विश्लेषणं कुर्मः ।

● **विजयकुमारः** *म्यासाचुसेट्स् (U.S.A.)*

फेब्रवरीमासस्य सम्भाषणसन्देशस्य मुखचित्रम् अतीवसुन्दरम् अस्ति ।

● **डी. फणिधरः** *द्रोणाचलम् (आ. प्र.)*

जनवरीमासस्य सञ्चिकायां प्रकाशिता 'कर्तव्यम्' इति कथा समीचीना आसीत् । कथायाः भाषा सरला स्पष्टा च आसीत् । राजनैतिकपरिप्रेक्ष्योपरि व्यङ्ग्याधारिता आसीत् । पाठकानां मनसि अपि कर्तव्यं प्रति ध्यानाकर्षणम् अभवत् ।

● **ओमप्रकाशशास्त्री** *पुष्कर (राजस्थानम्)*

'कर्तव्यम्' इति कथायाः पठनेन बाल्ये अधीतं 'कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि' इति सुभाषितं स्मृतिपटले आगतम् । भाषाशैली मनोरञ्जिका आसीत् ।

● **वागीश्वरीशिवरामभट्टः** *मङ्गलूरु*

आकर्षकशैल्या उत्तमलेखनैः युक्तायाः एतस्याः पत्रिकायाः मूल्यं अत्यन्तं न्यूनम् इति ज्ञात्वा आश्चर्यम् अनुभूतवती ।

सर्वेषु क्षेत्रेषु संस्कृतस्य प्रवेशः भवतु इति चिन्तयन्तः भवन्तः चलनचित्रक्रीडादिविषये लेखान् कदापि न प्रकाशितवन्तः ननु !

● **प्रज्ञा** *गोवा*

जनवरीमासे सहस्रचन्द्रदर्शनविषये प्रकाशितः लेखः बहु प्रियः अभवत् । 'कर्तव्यम्' कथा अपि उत्तमा आसीत् । सन्देशद्वारा संस्कृताभ्यासं कुर्वन् अस्मि । इदानीं बहून् विषयान् अवगन्तुं शक्नोमि ।

● **लक्ष्मीपतसोनी** *भीलाई (म.प्र)*

प्रमुखस्वामिमहाराजस्य अमृतमहोत्सव-वार्तां पठित्वा नितराम् आनन्दिता । सामाजिकपरिवर्तने अक्षरपुरुषोत्तमसंस्थया क्रियमाणम् कार्यम् अत्यन्तं श्लाघनीम् अस्ति । व्यवसनमुक्तिकुटीरसदृशानि केन्द्राणि अद्य सर्वत्र आवश्यकानि सन्ति ।

पुरुलिया शस्त्रपातनविषयकः लेखः बहु उत्तमः आसीत् । घटनायाः विश्लेषणम् समीचीनतया कृतम् अस्ति लेखकेन । अत्यन्तं सामयिकः लेखः ।

● **अनुषा** *गुल्बर्ग*



# आत्मीय बन्धो

# स्वागतं नववर्षस्य

नववर्षं नवं हर्षं समृद्धिं सुखसम्पदम् ।
कार्यसिद्धिं परां वृद्धिं विधत्तां सुचिरं शुभम् ।।

सर्वेभ्यः ग्राहकेभ्यः युगादिशुभाशयाः ।

नववर्षारम्भः भिन्नभिन्नजनैः भिन्नभिन्नकाले आचर्यते । चान्द्रमानयुगादिस्तु भारते अधिकांशजनैः वर्षारम्भत्वेन आचर्यते । चान्द्रमानयुगादिः चैत्रशुक्लप्रतिपदि (प्रथमातिथौ) सम्भवति ।

युगादिः इत्येषः शब्दः एव ज्ञापयति यत् एतत् दिनं युगस्य आरम्भं स्मारयति इति । यद्यपि कृतत्रेतादीनां युगानाम् आरम्भः अन्यान्यतिथिषु भवति तथापि कलियुगस्य आरम्भः तावत् चैत्रशुक्लप्रतिपदि भवति । तस्मात् एव सा तिथिः युगादित्वेन परिगण्यते ।

युगादिदिने निम्बपत्र-गुड-सम्मिश्रणं सेव्यते । श्लोकः कश्चन उच्यते च -

शतायुर्वज्रदेहाय सर्वसम्पत्कराय च ।
सर्वारिष्टविनाशाय निम्बकन्दलभक्षणम् ।। इति ।

गुडः मधुरानुभवं द्योतयति । निम्बपत्रं च तद्विरुद्धानुभवं द्योतयति । 'जीवने सुखस्य यथा तथा सुःखस्य अपि प्राधान्यं भवेत् । सुखं दुःखं च समभावेन स्वीकरणीयम्' इत्येतं सन्देशं ज्ञापयति - गुड-निम्बपत्रभक्षणम् ।

यथा जिह्वा सदा माधुर्यम् एव इच्छति तथा मनः अपि मधुरानुभवान् एव इच्छति । यद्यत् मधुरं भवति तत्तत् हितकरम् एव भवेत् इति न नियमः । क्वचित् तिक्तम् अपि हितकरं स्यात् । अतः परस्परविरुद्धयोः अपि धर्मयोः योग्ये काले योग्यप्रमाणेन सेवनम् एव युक्तं भवति ।

कालः अखण्डः । किन्तु व्यावहारिकसौलभ्याय वयं कालभेदान् कल्पयन्तः, तैः भेदैः व्यवहरामः । अतः तात्त्विकदृष्ट्या कालभेदादीनां न विशेषमहत्त्वम् । किन्तु तात्त्विकदृष्टिमन्तः न भवन्ति बहवः । तत्कारणात् एव 'कालभेदादीनां गौणत्वम्' इत्येतत् तत्त्वं सर्वे अवगन्तुं न शक्नुवन्ति । कालस्य अखण्डत्वम् अमूर्तं भवति । अमूर्तस्य तत्त्वस्य अवगमने क्लेशः सहजः । अतः अस्मत्प्राचीनैः लोकव्यवहारं मनसि स्थापयद्भिः कालभेदाः कल्पिताः ।

कालस्य सदुपयोगस्वीकारे एव खलु औचित्यम् अस्ति ? कौटुम्बिकक्लेशेषु निमग्नाः, विविधामिषवशीकृताः, अबोधोपहताः वा जनाः क्वचित् कालस्य सदुपयोगस्वीकारे उपेक्षाम् औदासीन्यं वा प्रदर्शयन्ति । 'सत्कार्ये प्रवर्तनीयम्' इत्यंशः विविधैः प्रकारैः तदा तदा स्मारणीयः भवति । तदर्थम् एव अस्मत्पूर्वजैः पौराणिककथाः कल्पिताः, उत्सवादीनां कथादीनां च सम्बन्धः अपि कल्पितः ।

अरण्यवासं समाप्य आगतः श्रीरामः युगादिदिने अभिषिक्तः सन् रामराज्यम् आरब्धवान् इति श्रूयते । वीरशैवपरम्परायाः पञ्चाचार्याणाम् अवतारः युगादिदिने एव प्रवृत्तः इति ज्ञायते । शालिवाहनशकस्य आरम्भः अपि युगादिदिने एव । एवं युगादिदिनस्य चारित्रिकमहत्त्वम् अपि अस्ति ।

'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ' इत्येतं गीताचार्यवचनं स्मरद्भिः अस्माभिः सुखकाले दुःखकाले चापि मनसः समस्थितिं रक्षद्भिः युगादेः सन्देशस्य अनुगुणं स्वजीवनं करणीयम् । तेनैव युगाद्याचरणस्य औचित्यम् । तदैव जीवनस्य सार्थकता ।

- सम्पादकः

"यदेवोपनतं दुःखात् सुखं तत् बलवत्तरम्"
- विक्रमोर्वशीयम् ।

दुःखानुभवानन्तरं यत् सुखं प्राप्यते तत् अधिकसन्तोषं जनयति ।



# भारतस्य वैज्ञानिकपरम्परा

● वि. नागराजः

***"अस्मत्पूर्वजैः लौकिकेषु तात्त्विकेषु च क्षेत्रेषु यादृशं गभीरं चिन्तनं कृतं तादृशं चिन्तनं प्रायः जगति अन्यत्र कुत्रापि न कृतम् । परन्तु तस्य चिन्तनस्य अल्पः एव भागः इदानीम् उपलभ्यते । सः अपि भागः प्रचाराभावात् अज्ञातः एव तिष्ठति ।"***

**प्राचीनभारतीयानां वैज्ञानिकसिद्धिविषये अनेकेभ्यः वर्षेभ्यः अध्ययनं कुर्वतः कस्यचित् संशोधकस्य लेखः एषः ।**

मानवीयसंस्कृतेः विशेषविकासः दृश्यते स्म प्राचीने भारते । अस्मत्पूर्वजाः लौकिकेषु तात्त्विकेषु च क्षेत्रेषु बहुधा चिन्तनं कृतवन्तः आसन् । भारते यादृशं चिन्तनं प्रवृत्तं तादृशं चिन्तनं प्रायः जगति अन्यत्र न प्रवृत्तम् । अन्यत्र संस्कृतेः बीजावापः अपि यदा न जातः आसीत् तदा भारते संस्कृतिः सुविकसिता आसीत् । तस्याः संस्कृतेः अनुगुणं व्यवहरन्तः स्वजीवनम् उदात्तं सार्थकं च कृतवन्तः आसन् अत्रत्याः । किन्तु दौर्भाग्यं नाम तादृशस्य उत्कृष्टचिन्तनस्य समग्रः भागः इदानीं न उपलभ्यते । धार्मिके तात्त्विके च क्षेत्रे यत् चिन्तनं कृतं तस्य कश्चन भागः प्राधान्येन इदानीम् उपलभ्यते । किन्तु वैज्ञानिकक्षेत्रे कृतं चिन्तनम् अंशतः अप्राप्तप्रायम् एव अस्ति इति वदामः चेत् न तत्र अतिशयोक्तिः । वैज्ञानिकक्षेत्रीयाः ये अत्यल्पाः अंशाः प्राप्ताः ते अपि प्रचाराभावात् अज्ञाताः एव तिष्ठन्ति लोके ।

प्रथमे द्वितीये च क्रिस्ताब्दे भारते भौतिकशास्त्रस्य बह्व्यः शाखाः - रसायनशास्त्रं, खगोलशास्त्रं, गणितं, वनस्पतिशास्त्रम् इत्यादयः - विकासं गताः आसन् एव । न केवलं ताः प्रगतिम्, अपि तु प्रगतेः पराकाष्ठां प्राप्तवत्यः आसन् । तथापि दौर्भाग्यवशात् एवं हि श्रूयते यत् विज्ञानस्य प्रारम्भः विकासः च पश्चिमदेशेषु जातः इति ! अहो विसङ्गतिः !!

जनाः अपि एतादृशेषु मिथ्यावचनेषु विश्वासं कुर्वन्तः दृश्यन्ते । अस्माकं विद्यासंस्थाः अपि एतम् एव मिथ्यांशं बोधयन्ति ।

वैज्ञानिकक्षेत्रे भारतीयं चिन्तनं यत् अस्ति तत् आधुनिकैः अधिकाधिकं ज्ञायेत । तदा एव तस्मिन् आदरः वर्धते । प्रकृतः लेखः तत् भारतीयं चिन्तनं स्थूलतया परिचाययति ।

**गणितम्**

भारतीयगणितज्ञानस्य आरम्भः अस्माभिः द्रष्टव्यः चेत् वेदकालपर्यन्तम् अनुधावनं करणीयम् । वेदेषु, तत्कालीनेषु अन्यग्रन्थेषु च गणितीयानाम् अंशानाम् उल्लेखः विशेषतः दृश्यते । समग्रे विश्वे पण्डितमण्डले एषा मान्यता अस्ति यत् बहूनां गणितीयांशानाम् आरम्भः भारते एव जातः इति । जनाः बहूनां गणितीयविषयाणां ज्ञानं भारतात् एव प्राप्तवन्तः दृश्यन्ते । तत्रापि अङ्कगणितक्षेत्रे, बीजगणितक्षेत्रे, भूमितिक्षेत्रे, त्रिकोणमितिक्षेत्रे च बहूनि अपूर्वाणि मूलभूतानि अनुसन्धानानि भारते एव कृतानि आसन् ।

इदानीं दशमाङ्कपद्धतिः लोके व्यवहारे अस्ति । एतस्यां पद्धतौ १-९ अङ्काः शून्यं च उपयुज्यन्ते । स्थानकारणतः अङ्कानां मूल्ये परिवर्तनम् अपि अङ्गीक्रियते । एषा दशमाङ्कपद्धतिः २००० अधिकवर्षेभ्यः पूर्वम् एव भारते आसीत् । अङ्कानां क्रमिकविकासः कथं जातः इत्येतम् अंशम् अधस्तनं चित्रं ज्ञापयति ।

* ब्राह्मीलिपियुक्तशिलालेखे दृष्टाः अङ्काः (क्रि. पू. ३००) → [illegible]
* ग्वालियर् शिलालेखे दृष्टाः अङ्काः (क्रि. श. ८७०) → [illegible]
* देवनागरी शिलालेखे दृष्टाः अङ्काः (क्रि. श. ११००) → १२३४५६७८९०
* आधुनिकसङ्ख्याः → 1 2 3 4 5 6 7 8 9 0

क्रि. श. ९०० पर्यन्तम् एषा अङ्कपद्धतिः अरबजनैः युरोपीयजनैः वा न ज्ञाता आसीत् । अरबदेशीयः गणितविद्वान् अल्खवारिस्मी (Al-Khowarizmi) (क्रि. श. ७८०-८५०) ऐदम्प्राथम्येन स्वकीये पुस्तके एतान् हिन्दु-अङ्कान्, स्थानाधारितमूल्यनिश्चयक्रमम्, एतदाधारितान् अन्यान् बहून् गणितप्रक्रियांशान् च



उपयुक्तवान् दृश्यते । तदनन्तरकाले एते सर्वे अंशाः लोके सर्वत्र प्रसृताः अभवन् । तत्कारणतः पश्चिमयुरोपप्रदेशेषु एतस्य गणितीयविचारस्य प्रचारः जातः ।

अतिप्राचीनः युरोपीयः हस्तलिखितग्रन्थः नाम - 'CONDEX VIGILANUS' इति । एषः अल्बेल्डो-आश्रमसम्बद्धः । एतस्मिन् ग्रन्थे १-९ अङ्कानाम् उल्लेखः कृतः दृश्यते । तत्रैव एतान् अङ्कान् अधिकृत्य एवं लिखितं दृश्यते - *"...गणितीयचिह्नानाम् उपयोगसमये अस्माभिः एतत्सम्बन्धितया एतत् अपि ज्ञातव्यं यत् प्राचीनहिन्दुजनानाम् अतिव्यापिका कुशाग्रबुद्धिता आसीत्"* इति । गणनकलाविषये भूमितिक्षेत्रे, अन्येषु स्वतन्त्रशास्त्रेषु च अन्यराष्ट्रजनाः हिन्दुजनानाम् अनुयायिनः सन्ति । *(अग्रगण्याः तावत् हिन्दवः एव)* नवानाम् अङ्कानाम् उपयोगः, स्थानबलात् अङ्कानां मूल्यस्य निश्चयः इत्यादयः अंशाः अत्र प्रमाणभूताः सन्ति ।

## शून्यम्

अङ्कस्थानाधारिता मूल्यनिश्चयपद्धतिः एव शून्यस्य अन्वेषणे मूलम् । 'ZERO' इत्येतत् कस्याचित् चिह्नस्य नाम । तच्च चिह्नं 'नास्तित्वं' द्योतयति । संस्कृतभाषायां नास्तित्वं सूचयति 'शून्य' शब्दः । 'झीरो' इत्यस्य मूलं तावत् शून्यशब्दः एव । संस्कृतभाषीयः एषः शून्यशब्दः अरबभाषां प्रविश्य निर्गत्य ल्याटिन्भाषां चापि प्रविश्य निर्गत्य 'झीरो' इति नामान्तरं प्राप्नोत् । तद्यथा -

| संस्कृतम् | | अरेबिक् | | ल्याटिन् | | |
|---|---|---|---|---|---|---|
| शून्यम् | → | सिफर् | → | झिफ्रे / सिफ्रे - | → | झीरो |
| SHUNYA | | SIFIR | | ZIFFRE / CIFFRE | | ZERO / CIPHER |

दशकादिस्थलाधारितायाः मूल्याङ्कपद्धतेः निर्माणात् विकासात् च बह्व्यः गणितप्रक्रियाः निर्मिताः अभवन् । अद्यापि ताः रक्षिताः उपयुज्यमानाश्च सन्ति ।

↑ *प्राचीनभारते अयोनिर्माणे उपयुज्यमाना अङ्गारधानी -*

*इदानीम् उपयुज्यमाना* ↓



## वर्गमूलं घनमूलं च

अपेक्षितसङ्ख्यायाः वर्गमूलस्य घनमूलस्य च प्राप्त्यर्थम् आधुनिके गणिते काचित् पद्धतिः अनुसृयते । वस्तुतः एषा पद्धतिः पञ्चमशतकीयेन (४९९ A.D.) आर्यभटेन अन्विष्टा आसीत् ।

आर्यभटीयः नियमः एवम् अस्ति -

*भागं हरेद्वर्गान्नित्यं द्विगुणेन वर्गमूलेन ।*
*वर्गाद्वर्गे शुद्धे लब्धं स्थानान्तरे मूलम् ।।* इति ।

एषा पद्धतिः १६१३ वर्षपर्यन्तं युरोपीयजनैः अज्ञातपूर्वा एव आसीत् । एवं सर्वप्रथमं बहुभ्यः वर्षेभ्यः पूर्वम् एव भारतीयेन अन्विष्टायाः एतस्याः पद्धतेः विषये इदानीम् अपि एवं बोध्यते यत् एषा पद्धतिः विदेशीयैः अन्विष्टा इति । वस्तुस्थितिं जानद्भिः अपि अस्माभिः तत्र विश्वासः क्रियते ! अहो अभिमानशून्यता अस्माकम् !

त्रैराशिकनियमः व्यस्तत्रैराशिकनियमश्च अङ्कगणितक्षेत्रस्य सुवर्णनियमत्वेन अङ्गीक्रियते । तौ च नियमौ भारते पूर्वकाले एव व्यवहारे उपयुज्यमानौ आस्ताम् । अतः बहवः पण्डिताः भावयन्ति यत् एतौ नियमौ अपि भारतात् एव पश्चिमदेशान् प्रति गतौ स्याताम् इति ।

## बीजगणितम्

बीजगणितस्य आरम्भः वेदाङ्गभूतेषु शुल्बसूत्रेषु एव अस्ति इति ज्ञायते । रूपरेखायाः समाधानं (Solutions of linear) यौगपद्यिकसमीकरणं (Simultaneous equations) इत्येतौ उभौ अपि विषयौ, भारतीयबीजगणितक्षेत्रे चर्चितौ एव । विभिन्नप्रकारकाणां यज्ञवेदीनां निर्माणसमये एतत्सम्बद्धाः विषयाः चर्चिताः । यज्ञवेदिनिर्माणकार्यद्वारा बीजगणितक्षेत्रीयाः बह्व्यः प्रक्रियाः विकासं गताः दृश्यन्ते ।

ब्रह्मगुप्तकाले (क्रि. श. ७००) बीजगणितं गणितक्षेत्रे स्वतन्त्रविषयरूपेण प्रवृद्धम् अभवत् । तच्च कुट्टकगणितं, बीजगणितम्, अव्यक्तगणितम् इत्यादिभिः नामभिः व्यवह्रियते स्म ।

**वर्गीयसमीकरणम् (Quardatic Equation)**

$ax^2 + bx + c = 0$ - इत्येतादृशानां वर्गीयसमीकरणानां समाधानम् आर्यभटः (प्रथमः) ब्रह्मगुप्तः इत्यादयः जानन्ति स्म । वर्गीयसमीकरणस्य समाधानं प्राप्तुम् इदानीं या प्रक्रिया आश्रीयते सा श्रीधराचार्येण (दशमे शतके स्थितेन) दत्ता अस्ति । तदीयः श्लोकः तावत् -

*चतुराहतवर्गसमैः रूपैः पक्षद्वयं गुणयेत् । अव्यक्तवर्गरूपैः उक्तौ पक्षौ ततो मूलम् ॥* इति ।

**क्रमयोजनं संयोजनं च (Permutation & Combination)**

क्रमयोजनसम्बद्धा संयोजनसम्बद्धा च पद्धतिः बहुप्राचीनकालात् एव भारते उपयुज्यमाना आसीत् । एतत् पद्धतिद्वयम् आधिक्येन काव्यनिर्माणे, वास्तुशास्त्रान्वये, सङ्गीतशास्त्रे औषधक्षेत्रे च उपयुज्यते स्म ।

$$n\,Cr = \frac{n(n\text{-}1)\,(n\text{-}2)\quad .....\ (n\text{-}r\text{+}1)}{1\ \ 2\ \ 3\ \ .....\ r}$$

इत्येतस्य साधारणनियमस्य निर्माणं वराहमिहिराचार्येण कृतं, यश्च आचार्यः नवमे शतके कर्णाटकराज्ये गणितज्ञत्वेन सुविख्यातः आसीत् । वराहमिहिराचार्यः पूर्वोक्तं नियमम् एवं श्लोकेन विवृणोति -

*एकाद्येकोत्तरतः पदमूर्ध्वाधर्यतः क्रमात्क्रमशः ।*
*स्थाप्य प्रतिलोमघनं प्रतिलोमघनेन भाजितं सारम् ॥* इति ।

**ज्यामितिः**

वेदकाले विभिन्नानां यज्ञवेदीनां निर्माणे क्वचित् समस्याः उत्पद्यन्ते स्म । तत्काले समस्यानिवारणार्थं ज्यामितेः उपयोगः क्रियते स्म । तत्कारणतः बहवः ज्यामितिक्षेत्रसम्बद्धाः विषयाः निरूपिताः भवन्ति स्म ।


सुल्तानगञ्जे उपलब्धः बुद्धविग्रहः

**बौधायनसूत्रम् (Pythagoras Theorem)**

पैथागोरससिद्धान्तनाम्ना इदानीं यः नियमः व्यवह्रियते स च पैथागोरसात् सहस्राधिकवर्षेभ्यः पूर्वम् एव भारतीयैः निर्मितः आसीत् । महामुनिः बौधायनः कात्यायनश्च एतं नियमं प्रदिपाद्य यथायोग्यं विवरणम् अपि दत्तवन्तौ दृश्येते ।

बौधायनः एवं वदति -

*"दीर्घचतुरस्रास्याक्ष्णया रज्जुः पार्श्वमानी तिर्यग्मानी*
*यत्पृथग्भूते कुरुतस्तदुभयं करोति"* इति ।

विभिन्नाकारकाणां यज्ञवेदीनां निर्माणे एतस्य सिद्धान्तस्य उपयोगः कृतः दृश्यते । चतुरस्रवेदी, समकोणवेदी, समद्विभुजाकृतिवेदी, विषमचतुर्भुजाकृतिवेदी इत्यादीनां निर्माणं क्रियते स्म अस्मत्पूर्वजैः ।

**$\pi$ मूल्यम्**

पै ($\pi$) इत्येतेन नाम्ना निर्दिश्यमानस्य मूल्यं प्रथमेन आर्यभटेन निर्णीतम् आसीत् । तेन निर्णीतं मूल्यं $\pi$ = ३.१४१६ अस्ति । आधुनिकं मूल्यं तावत् - ३.१४१६९२६ इति !

एतद्विषये आर्यभटीयः श्लोकः एवम् अस्ति -

*चतुरधिकं शतम् अष्टगुणं द्वाषष्टिस्तथा सहस्राणाम् ।*
*आयुतद्वयविष्कम्भस्यासन्नो वृत्तपरिणाहः ॥*

**त्रिकोणमितिः**

भारतेन विश्वाय दत्तेषु विषयेषु अन्यतमः अपूर्वः विषयः नाम 'त्रिकोणमितिः' । त्रिकोणमितिक्षेत्रे भारतीयैः ज्या, कोटिज्या इति शब्दद्वयं यत् उपयुज्यते स्म तदेव युरोपीयभाषायां सैन्, कोसैन् इति निर्दिश्यमानं सत् व्यवहारक्षेत्रे इदानीं दृश्यते । प्रथमेन आर्यभटेन ज्याकोष्टकं रचितम् आसीत्, यत्र च ०-९०° परिमिते क्षेत्रे विद्यमानस्य गोलखण्डस्य रेखाः निर्दिष्टाः आसन् । भारतीयखगोलशास्त्रे ग्रहाणां स्थानस्य निश्चयसमये त्रिकोणमितेः, बहवः अंशाः उपयुज्यन्ते स्म ।

**धातुशास्त्रम्**

भारतेन येषु उत्कृष्टा सिद्धिः प्राप्ता आसीत् तादृशेषु अन्यतमं क्षेत्रम् अस्ति धातुशास्त्रक्षेत्रम् । वैदिकसाहित्ये सुवर्णं, रजतं, ताम्रं, त्रपुः, अयः इत्यादीनां धातूनाम् उल्लेखः कृतः अस्ति । तेषां विविधाः उपयोगाश्चापि वर्णिताः सन्ति ।

सुवर्णं कण्ठहार-कङ्कणादीनाम् आभरणानां निर्माणे विशेषतः उपयुज्यते स्म । मोहञ्जोदारो-उत्खनने महता कौशलेन निर्मितानि सुन्दराणि सुवर्णाभरणानि प्राप्तानि सन्ति । विज्ञानिनः अभिप्रयन्ति यत् एतानि आभरणानि ५००० वर्षेभ्यः पूर्वं निर्मितानि आसन् इति । एवं हि श्रूयते यत् कर्णाटकस्थायां 'हट्टी' प्रदेशस्थायां सुवर्णखन्यां २००० वर्षेभ्यः पूर्वम् एव सुवर्णं प्राप्यते स्म इति ।

ताम्रस्य, तज्जन्ययोः कांस्य-पित्तलयोः च उपयोगः वेदकालात् एव क्रियते स्म । ताम्रमय्यः कांस्यमय्यः च प्रतिमाः बहुधा निर्मीयन्ते स्म प्राचीनकाले । अस्मत्पूर्वजाः जानन्ति स्म यत् एते धातवः उत्कृष्टप्रतिमादिनिर्माणे उपकारकाः इति, एतैः धातुभिः निर्मिताः प्रतिमादयः चिरकालं स्थास्यन्ति इति च ।

बिहारराज्ये सुल्तानगञ्जप्रदेशे जीर्णे कस्मिंश्चित् बुद्धालये भगवतः बुद्धस्य कश्चन विग्रहः प्राप्तः अस्ति । विग्रहस्य औन्नत्यं ७'.६", भारश्च एकटन्नपरिमितः स्यात् । ताम्रधातुशास्त्रक्षेत्रे भारतेन साधितायाः अत्याश्चर्यकर्याः प्रगतेः द्योतकम् अस्ति एषः विग्रहः ।

**अयः**

अयसः (Iron) श्वेतायसः (Steel) च क्षेत्रे अपि भारतस्य प्रगतिः उल्लेखार्हा एव अस्ति । देहलीनगरे 'महरोली' इत्यत्र स्थितः अयोमयः स्तम्भः अत्र उदाहरणम् । प्रसिद्धः एषः अयःस्तम्भः तत्कालीनायाः उत्कृष्टकार्यशैल्याः द्योतकः अस्ति । एषः स्तम्भः १६०० वर्षेभ्यः पूर्वम् एव निर्मितः । किन्तु सः दीर्घकालिकान् वातावरणपरिणामान् सहमानः सन् अल्पान् अपि हानिम् अप्राप्नुवन् यथापूर्वम् अक्षतरूपेण तिष्ठन् भारतस्य श्रेष्ठतां ख्यापयति ।

उत्तमजातीयस्य चित्रायसः निर्माणे दक्षिणभारतं सुविख्यातम् आसीत् । चित्रायोरूपेण अयसः परिवर्तनार्थं प्राचीनैः अन्धमूषापद्धतिः (बकयन्त्रम्) उपयुज्यते स्म । अयसः दृढीकरणे अङ्गाराम्लस्य प्राधान्यं भवति इति प्राचीनाः लोहकाराः जानन्ति स्म । अतः ते पिहितस्य मृत्तिकाबकयन्त्रस्य अन्तः अयसः लघुखण्डान् स्थापयित्वा तत्र अङ्गाराम्लम् अपि संयोज्य उष्णीकुर्वन्ति स्म । ततः चित्रायसः निर्माणं भवति स्म ।

प्रसिद्धस्य 'दमास्कस्'खड्गस्य निर्माणे उपयुक्तस्य अयसः नाम 'वूट्स्' (Wootz) इति । एषः शब्दः कन्नडभाषायां स्थितस्य 'उक्कु' इत्येतस्य अपभ्रंशः एव इति भाषाशास्त्रिणां निर्णयः अस्ति ।

**कुप्यातुः (ZINK)**

खनिजधातुभ्यः कुप्यातोः प्राप्त्यर्थं या सन्धानपद्धतिः अनुस्त्रियते स्म तस्याः कारणतः भारतं निश्चयेन अभिनन्दनपात्रीभूतम् अस्ति । राजस्थानराज्ये झवारप्रदेशे क्रि. पू. ४०० वर्षे स्थिताः कुप्यातुखन्यः समासादिताः सन्ति । किन्तु खनिजेभ्यः कुप्यातोः प्राप्त्यर्थम् अपेक्षितं तन्त्रज्ञानं १८ शतकपर्यन्तम् अपि युरोपदेशेषु अज्ञातम् एव आसीत् । १७४८ तमे वर्षे विलियं चाम्पियन् युरोपदेशेषु एतस्याः पद्धतेः परिचयं कारितवान्, प्रयोगे आनीतवान् च ।

**सस्यशास्त्रम्**

सस्यजीवनस्य अध्ययनं भारते प्राचीनकालात् अपि प्रवर्तते एव । अथर्ववेदः सस्यानाम् आकारं, गुणधर्मान्, लक्षणानि च अवलम्ब्य सस्यानां विभागं करोति । सस्यानां विभागाः केचन –

* प्रस्थानवती (Spreading)
* एकशुङ्गा (With Single whorl of calyx)
* प्रतानवती (Extending)
* काण्डिनी (Jointed)
* नघरिषा (Harmless)
* स्तम्भिनी (Bushy)
* अंशुमती (Having Many Shoots)
* विशाखा (Having Extending branches)
* जीवाला (Lively)
* मधुमती (Very Sweet)

एषः सस्यविभागक्रमः ५००० वर्षेभ्यः पूर्वम् एव कृतः आसीत् । किन्तु पाश्चात्यदेशेषु तु ग्रीक्देशीयः थियोप्रस्टस्वर्यः सस्यशास्त्रस्य संस्थापकः इति परिगण्यते येन क्रि. पू. तृतीये शतके सस्यविभागक्रमः कृतः ।



देहल्यां विद्यमानः १६०० वर्षेभ्यः पूर्वं निर्मितः अयःस्तम्भः

**वृक्षायुर्वेदः**

महर्षेः पराशरस्य (क्रि. पू. १००) वृक्षायुर्वेदग्रन्थः सस्यशास्त्रक्षेत्रे अपूर्वत्वेन परिगण्यते । सस्यशास्त्रम् अधिकृत्य गभीरं वैज्ञानिकं च विवरणम् अत्र कृतं दृश्यते । महर्षिः पराशरः पुष्प्यतां वृक्षाणां विभिन्नपरिवारान् उल्लिखितवान् अस्ति । तेन कृतः विभागक्रमः तथा वैशिष्ट्यपूर्णः वैज्ञानिकः च अस्ति यत् अद्यापि आधुनिके सस्यशास्त्रे सः एव विभागक्रमः अनुक्रियते । तद्यथा –

| पराशरकृतः विभागः (क्रि. पू. १००) | आधुनिकः विभागः (क्रि. श. १७००) |
|---|---|
| शमीगणीयाः | Leguminoesae |
| पुपीलिकगणीयाः | Rutaceae |
| स्वस्तिकगणीयाः | Cruciferae |
| कूर्चगणीयाः | Compositae |

प्राचीनभारतस्य वैज्ञानिकपरम्परायाः विषये ये अधिकं ज्ञातुम् इच्छन्ति ते अधोनिर्दिष्टान् ग्रन्थान् पठितुम् अर्हन्ति -

* A Concise History of Science in India
  Indian National Science Academy, New Delhi
* The cultural Heritage of India Vol-VI
  The Ramakrishna Mission Institute of Culture, Calcutta
* Scientific Heritage of India
  The Mythic Society, Bangalore
* Indian Contribution to the World of Science
  (A support material to teachers)
  DSERT, Govt. of Karnataka

**रसकोषः (Plant cell)**

पराशरमुनिः सस्यानां रसकोषविषये विस्तरेण कथयति स्वग्रन्थे । तेन कथितं तावत् आश्चर्यकरं वैज्ञानिकं च अस्ति यत् सूक्ष्मदर्शकादिसाहाय्यं विना अपि सः यत् कथितवान् तत् राबर्ट्हुक्केन (क्रि. श. १६६५) सूक्ष्मदर्शकसाहाय्येन यत् विवरणं दत्तं ततोऽपि वैज्ञानिकं निर्दुष्टं च अस्ति !!

पराशरमुनेः विवरणं तावत् -

* कलावेष्टनम् (Outer Wall)
* सूक्ष्मपत्रकम् (Inner Wall)
* रञ्जकयुक्ता रसाश्रया
  (Sap with colouring matter)
* अन्वक्षा (केवलनेत्राभ्यां द्रष्टुम् अशक्या)



कुप्यातोः प्राप्त्यर्थम् उपयुज्यामाना सन्धानपद्धतिः ।



राबर्ट्हुक् तु एतावत् एव वदति - ''सस्येषु केचन विभागाः भवन्ति । ते च मधुकोषरचनासादृश्यं वहन्ति'' इति ।

सस्यानि मृत्तिकातः द्रवरूपम् आहारं प्राप्नुवन्ति इत्येषः अंशः अस्मत्प्राचीनैः सुविदितः एव आसीत् । वृक्षपर्यायः 'पादप'शब्दः (पादैः पिबति इति पादपः) एतम् एव अर्थं द्योतयति । महाभारतस्य शान्तिपर्वणि - 'वृक्षः केन प्रकारेण भूमितः जलं स्वीकरोति' इत्येषं अंशः एवं निरूपितः ।

*वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत् ।*
*तथा पवनसंयुक्तः पादैः पिबति पादपः ।।* इति ।

सस्यानाम् एषा जलोद्धरणक्रिया आधुनिकविज्ञाने SUCTION - FORCE इति उच्यते । एषः सिद्धान्तः १८९४ तमे क्रिस्ताब्दे डिक्सन्-जाली (Dixon & Jolly) नामकाभ्याम् अमेरिकादेशीयाभ्यां सस्यशास्त्रीयाभ्यां प्रतिपादितः ।

एवम् अस्मत्प्राचीनैः विज्ञानस्य विविधक्षेत्रेषु बहुविधसिद्धयः सम्पादिताः सन्ति । तत्रापि भारतीयानां वैशीष्ट्यं नाम ते आधुनिकोत्कृष्टसाधनानाम् अभावे सत्यपि, पाश्चात्येषु एतादृशक्षेत्रेषु प्रवेशम् एव कर्तुम् असमर्थेषु, स्वप्रतिभाविलासेन अपूर्वान् बहून् अंशान् निर्दुष्टतया प्रकटितवन्तः । तैः उक्तानाम् अंशानां वैज्ञानिकता निर्दुष्टता इदानीम् अपि अक्षुण्णा एव अस्ति । अस्मत्प्राचीनैः साधितायाः अपूर्वसिद्धेः कारणतः किम् अस्माभिः अभिमानः प्राप्तव्यः नास्ति ? प्राचीनानां सिद्धयः किं प्रचुरीकरणीयाः न सन्ति ? प्राचीनानां विषये यथायोग्यम् आदरः किं प्रदर्शनीयः नास्ति ? □□



# आषाढस्य प्रथमदिवसे

✍ डा . प्रशस्यमित्रः शास्त्री
बी - २९, आनन्दनगरम्,
रायबरेली (उ.प्र)

***"एनं पराजयं विजयरूपेण परिवर्तयितुं मया किमपि करणीयम् एव । काचित् नवीना भूमिका आरचनीया ।"***

एकदा मध्याह्ने आकाशे आषाढमासस्य अभिनवान् मेघान् दृष्टवतः सान्ताक्रूजोपनगरनिवासिनः देवदत्तस्य मानसं किञ्चित् विचलितम् इव जातम् । सः चिन्तनम् आरब्धवान् यत् का खलु एवंविधा अस्ति या मह्यं किञ्चित् विशिष्टं प्रेम प्रदातुं समर्था भवेत् इति । देवदत्तस्य मनसि कासाञ्चित् मुखमण्डलानि प्रकटीभूतानि, याभिः सह सः अध्ययनकाले विभिन्नेषु चतुष्पथेषु पर्यटनं कृतवान् आसीत् । तासु काश्चन विवाहादिकं विधाय स्वकीयगार्हस्थ्यकर्मणि व्यापृताः आसन् । पुनः काश्चित् तु कुमार्यः एव सत्यः कमपि राजकुमारं प्रतीक्षन्ते स्म । कदाचित् तासां मेलनम् अपि भवति स्म । ताः कदाचित् देवदत्तं स्वगृहं प्रति विशेषावसरेषु निमन्त्रयन्ति स्म अपि । परन्तु देवदत्तः आसप्ताहं स्वकीये कार्यालयादिकार्ये तथा व्याप्तः भवति स्म यत् सः क्वचित् गन्तुम् अपि समयं न प्राप्नोति स्म । रविवासरे अपि तस्य एषा एव स्थितिः । यतः तस्मिन् दिने सः पूर्णरूपेण विश्रान्तिम् इच्छति स्म ।

अद्य तु रविवासरः । देवदत्तः गृहे एव तिष्ठन् विश्रान्तिम् इच्छति स्म । परन्तु नवोद्गताः आषाढस्य मेघाः तं व्याकुलीकुर्वन्ति स्म । महाकविः कालिदासः सत्यमेव उक्तवान् अस्ति - 'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः' इति । देवदत्तः अपि साम्प्रतं कस्याः अपि साहचर्यं नितराम् इच्छति स्म । सा सहचरी कुत्र प्राप्येत ?

सः गृहात् बहिः आगतः । तदा एव तस्य स्मृतिपथे श्वेतायाः संस्मृतिः समागता । श्वेता तु पूर्वं तस्य सहपाठिनी आसीत् । श्वेतायाः विवाहः इतोऽपि न संवृत्तः आसीत् । देवदत्तः इतःपूर्वं श्वेतायाः गृहं बहुवारं गतः आसीत् । अतः सः निश्चितवान् यत् अद्य श्वेतायाः गृहं प्रति गमनम् एव वरं स्यात् इति ।

देवदत्तः टेक्सियानेन चेम्बूरोपनगरं प्रति गतवान् । श्वेतायाः गृहं तावत् तृतीये अट्टे आसीत् । सः तद्गृहस्य द्वारघटिकां निपीडितवान् ।

श्वेतायाः माता द्वारम् उद्घाटितवती । सा किञ्चित् विहस्य पृष्टवती - "किन्निमित्तम् आगतवान् भवान् ?"

"अपि श्वेता गृहे अस्ति ?"

"अस्ति । अन्तः आगच्छतु तावत् ।"

गृहस्य अन्तः गत्वा देवदत्तः सुसज्जितप्रकोष्ठस्य सोफासने उपविष्टवान् । श्वेतायाः माता पुनः पृष्टवती - "अपि कुशलम् ?"

"सर्वं कुशलम् । कथम् अस्ति भवती ?"

"अहं कुशलिनी ।"

श्वेतायाः माता गृहस्य अन्तर्भागं गतवती । परन्तु श्वेता न आगतवती । प्रत्युत तस्याः जनकः समागतः । तं दृष्ट्वा आदरभावं प्रकटयन् देवदत्तः आसनात् उत्थितः । एतत् दृष्ट्वा श्वेतायाः पिता उक्तवान् - "अरे उपविशतु तावत् ...."

देवदत्तः पुनः उपविष्टवान् । श्वेतायाः जनकः अपि तस्मिन् एव सोफासने उपविष्टवान् । ततः सः देवदत्तं पृष्टवान् - "चिरकालानन्तरं भवतः दर्शनम् ! किमर्थम् एवम् ?"

देवदत्तः किञ्चित् विहस्य उक्तवान् - "एषु दिनेषु मम कार्यभारः एतावत् अस्ति यत् विरामस्य प्राप्तिः सर्वथा अशक्या जाता अस्ति ।"

"कुत्र उद्योगी भवान् ?"

"कस्मिंश्चित् स्वायत्तसंस्थाने ।"

"संस्थानस्य किं नाम ?"

देवदत्तः संस्थानस्य नाम उक्तवान् । तत् श्रुत्वा श्वेतायाः जनकः पुनः उक्तवान् - "एतत् नामधेयं पूर्वं कदापि न श्रुतवान् अहम् ।"

"सद्यःकाले आरब्धम् एतत् संस्थानम् ।"

"एवं तर्हि कार्यालये कार्यबाहुल्यं स्यात् भवतः ?"

"एवम् ।"

"कियत् वेतनं भवतः ?"

"साधरणम् एव वेतनं मम ।"

"तन्नाम ?"

"चतुःसहस्रं रूप्यकाणि ।"

एतत्सर्वं श्रुतवतः श्वेतायाः पितुः मुखे गाम्भीर्यलक्षणानि उत्पन्नानि । सः पुनः पृष्टवान् - "कुत्र निवासः भवतः ?"

"सान्ताक्रूजोपनगरे 'स्ट्रीट्'भवने ।"

"किं भवतः गृहं स्वकीयम् ?"

एतादृशानां प्रश्नानां श्रवणात् देवदत्तः तु क्षुब्धः इव जातः । एतादृशाः प्रश्नाः तस्मै न रोचन्ते स्म । अत्र आगमनेन एतादृशाः प्रश्नाः सम्मुखीकरणीयाः भवेयुः इति यदि सः अज्ञास्यत् तर्हि अत्र न आगमिष्यत् एव । स तु श्वेतया मेलितुम् आगतः आसीत्, न तु तस्याः जनकेन मेलितुम् ।

आषाढमासस्य नवागतं मेघमण्डलं तस्य चित्ते आकुलताम् उत्पादितवत् आसीत् । ताम् आकुलताम् श्वेता अपनयेत् इति विचिन्त्य सः अत्र समागतः आसीत् । किन्तु हा हन्त ! श्वेता कुत्रापि न दृश्यते ! अन्तर्भागात् बहिः न आगच्छति एव सा । 'अन्तः किं कुर्वती स्यात् श्वेता ? कियत्पर्यन्तं मया एतस्य महानुभावस्य प्रश्नानाम् आक्रमणं सोढव्यं भवेत् !' इत्येवं चिन्तयन् उपविष्टवान् देवदत्तः ।

स्वकीयस्य प्रश्नस्य उत्तरम् अप्राप्य श्वेतायाः जनकः पुनरपि देवदत्तं पृष्टवान् - "यत्र भवान् निवसति तत् गृहं किं स्वकीयम् ?" इति ।

देवदत्तः शान्तस्वरेण उक्तवान् - "न हि ।" ततः सः श्वेतायाः जनकं पृष्टवान् - "श्वेता किं कुर्वती अस्ति ?"

"सा प्रायः ....." इति कथयन् एव श्वेतायाः पिता ततः समुत्थाय शनैः शनैः गृहस्य अन्तर्भागं गतवान् ।




किञ्चित्कालानन्तरं श्वेता तस्य पुरतः आगत्य स्थितवती । सा तत्र न उपविष्टवती । तस्याः मुखमण्डले प्रसन्नतायाः भावाः न दृश्यन्ते स्म । सा पृष्टवती - "कथयतु मित्र । किन्निमित्तम् आगमनं भवतः ?"

देवदत्तः सोफासनात् समुत्थाय स्पष्टतया उक्तवान् - "अहम् अद्य भवत्याः साहचर्यम् अभिलषामि ।"

"तदर्थं मया किं करणीयम् ?"

"मया सह किं भवती आगन्तुं शक्नुयात् ?"

"कुत्र गमनम् ?"

"चलच्चित्रं द्रष्टुम् ।"

"मम अद्य महती शिरोवेदना ।"

"वेदनानिवारिकां गुलिकां स्वीकरोतु । सर्वं सम्यक् भविष्यति ।"

"गुलिका एतावता स्वीकृता एव ।"

"यदि भवती मया सह न आगमिष्यति तर्हि अहं मृतः भवेयम् ।"

"भवतु नाम तथैव ।"

"किम् एषः एव भवत्याः अन्तिमः निर्णयः ?"

"आम्"

देवदत्तः ज्ञातवान् एव यत् श्वेतायाः शिरोवेदना नास्ति, सा असत्यं वदन्ती अस्ति इति । वस्तुतः सा देवदत्तेन सह भ्रमणं न इच्छति स्म । सा पितुः मुखात् ज्ञातवती आसीत् यत् देवदत्तः सम्प्रति कस्मिंश्चित् साधारणे कार्यालये कार्यरतः अस्ति इति, सान्ताक्रूजोपनगरे कस्मिंश्चित् भाटकगृहे निवसति इति च । अतः सा निर्णीतवती आसीत् यत् एतादृशस्य सहवासात् न कोऽपि लाभः इति ।

देवदत्तः एतत्सर्वं मनसि आकलय्य शान्तस्वरेण उक्तवान् - "अस्तु, साधयामि तावत् ।"

श्वेता गत्वा द्वारम् उद्घाटितवती । देवदत्तः सोपानानि अवरुह्य राजपथं समायातः । परन्तु तस्य मनसि काये च कोऽपि अग्निः ज्वलति इव । सः नितरां ज्वालावलीढः संवृत्तः । अद्य श्वेतायाः गृहे यादृशः तिरस्कारः अवमानश्च प्राप्तः तादृशः तिरस्कारः अवमानः वा तेन पूर्वं कदाचिदपि कस्याश्चित् अपि कामिनीतः अपि न प्राप्तः आसीत् । सः राजपथे विद्यमानात् ताम्बूलापणात् एकं ताम्बूलं क्रीत्वा मुखे निधाय स्वकीयैः दन्तैः तस्य सरोषं गाढं चर्वणं कुर्वन् स्वकीयं मानसिकं क्षोभं शमयन्

आत्मानं शान्तं कर्तुं प्रयत्नं कृतवान् ।

आषाढस्य अभिनवाः मेघाः शनैः शनैः आकाशम् आच्छादयन्तः वर्धमानाः सञ्जाताः । देवदत्तः निर्निमेषदृष्ट्या आकाशं दृष्टवान् । 'इदानीं किं करणीयम्' इति निर्णेतुं न शक्तवान् सः । 'अग्रे कुत्र गन्तव्यम्' इति प्रश्नः तं बाधते स्म । यद्यपि गमनार्हाणि स्थलानि अन्यानि अपि आसन् । रचनायाः गृहं, वन्दनायाः प्रासादं, लतायाः निकेतनं वा गन्तुम् अर्हति स्म सः । परन्तु श्वेतायाः सकाशात् तथाविधम् अपमाननं प्राप्तवान् सः कुत्रापि शान्तिं प्राप्तुं न अर्हति स्म । तया प्रदर्शितः तिरस्कारभावस्तु दवाग्निः इव तं दहति स्म ।

अतः मनसि किमपि सङ्कल्प्य सः निश्चयं कृतवान् यत् पुनरपि श्वेतायाः गृहम् एव गन्तव्यम् इति । यदा सः विश्वविद्यालये अध्ययनं कुर्वन् आसीत् तदा श्वेतया सह राजमार्गे चतुष्पथे, उद्याने अन्यत्र च इतस्ततः पर्यटनं कृतवान् आसीत् । तया सह कदाचित् चलच्चित्रं द्रष्टुम् अपि गतवान् आसीत् सः । चायपानादिकं तु बहुवारं तया सह कृतम् आसीत् । एवं स्थिते अद्य तिरस्कारः ! कथम् अद्य देवदत्तः स्वपराजयम् अङ्गीकुर्यात् ? 'नैव । एवं भवितुं न अर्हति । एनं पराजयं विजयरूपेण परिवर्तयितुं मया किमपि करणीयम् एव । काचित् नवीना भूमिका आरचनीया' इत्येवं विचिन्त्य सः पुनरपि श्वेतायाः गृहं समागत्य द्वारसमीपे स्थितवान् ।

सः द्वारघटिकायाः पिञ्जं शनैः निपीडितवान् । श्वेतायाः जननी एव आगत्य द्वारम् उद्घाटितवती । देवदत्तस्य दर्शनात् तस्याः मुखात् प्रसन्नभावः अपगतः । यत्र सुस्मितिः भवेत् तत्र इदानीं क्षोभभावः परिदृश्यते स्म । सा पृष्टवती – "पुनरपि किमर्थम् आगमनं भवतः ?"

"आर्ये, मया किमपि परिस्खलितम् आसीत् ।"

"किं तत् ?'

"भवद्गृहात् निर्गत्य राजमार्गे पदं स्थापयन् अहं स्मृतवान् यत् यदर्थम् आगतः आसं तदेव न कृतवान् इति ।"

"किमर्थम् आगतवान् आसीत् भवान् ?"

"भवतः सर्वान् निमन्त्रयितुम् अहम् आगतः आसम् ।"

"किंनिमित्तं निमन्त्रणम् ?"

"मदीयस्य नूतनगृहस्य प्रवेशार्थम् ।"

श्वेतायाः माता विस्मयान्विता पृष्टवती –

तात ! कार्यसिद्धिनिमित्तं प्रयत्नं कर्तुम् एतत् वयः न उचितम् । कृपया विश्रान्तिसुखम् अनुभवतु भवान् ।

"गृहं कुत्र निर्मितम् ?"

"आदर्शनगरे, उद्यानसमीपे ।"

"अहो, एषः तु मनोहरः वृत्तान्तः । मोदावहः विषयः । अन्तः आगच्छतु तावत् । इदम् आसनम् । उपविशतु । एषा अहम् आर्यपुत्रं समाह्वयामि ।"

देवदत्तः अन्तः गत्वा सोफासने सुखेन उपविष्टवान् । श्वेतायाः माता तत्र स्थित्वा एव पतिं सम्बोधयन्ती उच्चैः आहूतवती – "आर्य....., अयि, श्रुतम् ? अत्र आगच्छतु ।....."

श्वेतायाः पिता समागतः ।

"किमर्थम् आह्वानम् ?" इति प्रश्नं कुर्वन् एव बहिः आगतः सः पुनरपि आगतं देवदत्तं दृष्ट्वा कञ्चित् उपेक्षाभावं प्रकटयन् उक्तवान् – "भवान् ....."

श्वेतायाः माता स्वमुखमण्डले मन्दहासं लिप्ता उक्तवती – "अयि भोः, देवदत्तः अस्मान् निमन्त्रयितुम् आगतः ।

"किन्निमित्तं निमन्त्रणम् ?"

"गृहप्रवेशार्थम् ।"

"कस्य गृहम् ? एतस्य ? कुत्र गृहं निर्मितम् ?"

"आम् ? एतस्य एव । आदर्शनगरे, उद्यानसमीपे निर्मितम् ।"

एतत् श्रुत्वा श्वेतायाः पिता देवदत्तं सकौतुकं पश्यन् उक्तवान् – "तदेतत् सर्वं भवता पूर्वम् एव किमर्थं न उक्तम् ?"

देवदत्तः विहसन् उक्तवान् – "मया तु कथनस्य अवसरः एव न प्राप्तः । ममागमनसमनन्तरम् एव भवान् नानाविधान् प्रश्नान् कर्तुम् उद्युक्तः अभवत् । अहं तेषाम् उत्तरदाने तथा व्यस्तः अभवं यत् तन्मध्ये मया स्वकीयागमनकारणम् एव सर्वथा विस्मृतम् । इदानीं राजमार्गे गमनसमये यदा तत् स्मृतं तदा पुनः आगतः । यदर्थम् आगतं तदेव विस्मृतम् आसीत् मया....."

श्वेतायाः पिता विस्मयं प्रकटयन् सन्तोषमिश्रितस्वरेण उक्तवान् – "विचित्रा विस्मरणशीलता भवतः !"

"वस्तुतः मया चिन्तितम् आसीत् यत् सर्वप्रथमं श्वेतां सर्वं निवेद्य ततः भवन्तौ निवेदनीयौ इति । किन्तु सर्वम् अन्यथा जातम् । ममैव सर्वः दोषः आसीत् ।"

श्वेतायाः पिता पूर्ववत् देवदत्तस्य समीपे उपविश्य पत्नीम् उक्तवान् – "अरे, चायं सज्जीकरोतु तावत् । मिष्टखाद्यादिकम् अपि भवतु....."

तदा देवदत्त उक्तवान् – "न हि, न हि । अलं, चायादिसज्जीकरणेन । मिष्टखाद्यं मास्तु इदानीम् ।"

श्वेतायाः पिता उक्तवान् – "एतत् कथं भवितुम् अर्हति ? चिरकालानन्तरं भवतः आगमनम् । तन्निमित्तं मुखं मधुरं करणीयम् एव ।"

"तदर्थं पुनः कदाचित् आगमिष्यामि ।"

"पुनरागमनप्रस्तावः अन्यः । इदानीं मिष्टखाद्यं किमपि खादनीयम् एव ।"

"सर्वथा न शक्यते श्रीमन् ! उदरे न अल्पोऽपि अवकाशः ।"

"अस्तु तर्हि । किन्तु चायपाने न स्यात् खलु काऽपि आपत्तिः ?"

"नैव । चायम् अपि न अपेक्ष्यते ।"

"न हि भोः । चायं तु पातव्यम् एव" – श्वेतायाः माता सानुरोधम् उक्तवती ।

देवदत्तः तदनन्तरं कामपि आपत्तिं न प्रदर्शितवान् । श्वेतायाः माता चायनिर्माणार्थं निर्गता । श्वेतायाः पिता तदा देवदत्तम् उक्तवान् – "एषः तु मनोरमो वृत्तान्तः ।"

देवदत्तः विहस्य उक्तवान् – "वृत्तान्तेऽस्मिन् किं वैशिष्ट्यम् ?"

"भवता भूखण्डः (निवेशनं) कथं समासाधितम् ? धनं दत्त्वा क्रीतम्, उत कस्यचित् मन्त्रिणः प्रभावेण प्राप्तम् ?"

"न हि कस्यचित् मन्त्रिमहोदयस्य प्रभावेण, प्रत्युत वर्षात् पूर्वं धनं दत्त्वा

क्रीतम् ।''

''समग्रे निवेशने भवनं निर्मितम् ?''

''अथ किम् ?''

''कियत् धनं व्ययितम् ?''

''प्रायः सप्तलक्षं रूप्यकाणि ।''

एतत्सर्वं श्रुतवतः श्वेतायाः पितुः जिज्ञासा प्रवृद्धा । सः पुनः कुतूहलेन पृष्टवान् - ''एतावता धनं भवता कुतः प्राप्तम् ?''

''व्यवसायद्वारा ।''

''व्यवसायात्? कीदृशात् व्यवसायात् ?''

''अस्माकं सविधे बस्यानानि ट्रक्यानानि च सन्ति ।''

''अहो, एवम् !''

''आम्''

''कदा आरभ्य एषः व्यवसायः ?''

''बहुभ्यः दिनेभ्यः आरभ्य''

''एतेन सहैव उद्योगः अपि क्रियते ?''

''आम् । किन्तु अहं चिन्तयामि यत् अचिरात् एव उद्योगः परित्यक्तव्यः इति । यतः सर्वस्य निर्वहणं क्लेशाय भवति । भवान् जानाति एव यत् व्यवसायः वाणिज्यं वा केवलेन अन्याश्रयणेन परिचालयितुं न शक्यते इति । स्वयम् एव सर्वं परिशीलनीयं भवति ।''

अत्रान्तरे श्वेतायाः माता चायम् आनीतवती । तस्याः हस्ततः चायपात्रं स्वीकृत्य देवदत्तः द्वित्रवारं चायस्य चूषणं कृतवान्, पात्रम् अधः स्थापितवान् च ।

श्वेतायाः माता स्वपतेः अभिमुखं सोफासने उपविष्टवती । ताम् उक्तवान् श्वेतायाः पिता - ''अयि, ज्ञायते ? एषः देवदत्तः बहुवित्तयुक्तः जनः । इदानीम् एतस्य पार्श्वे बस्यानानि ट्रक्यानानि च सन्ति ।''

श्वेतायाः माता पतिम् उद्दिश्य उक्तवती - ''एवम् ! यदि पुरुषस्य इच्छाशक्तिः प्रबला भवति, तर्हि सः किं किं न साधयेत् ? सर्वं तत्तस्य ललाटलिखितम् । भवतः अपि वर्षाणि अतीतानि । किन्तु भवता किं वा साधितम् ? एतावन्ति वर्षाणि अतीतानि चेदपि एकं स्वकीयं भवनम् अपि न निर्मितम्'' इति ।

ततः सा देवदत्तं पश्यन्ती उक्तवती - ''चाये शर्करा अल्पीयसी तु न स्यात् खलु !'' इति ।

''न हि । सर्वं समीचीनम् अस्ति ।''

श्वेतायाः जनकः पृष्टवान् - ''नवागारप्रवेशः कदा ?''

''अग्रिमे गुरुवासरे सायङ्काले ।''

''स्वकीयगृहस्य सङ्केतः मार्गनिर्देशः च प्रदातव्यः ।''

''भवान् चिन्तितः मा भवतु । अहं स्वकीयं कार्यानं प्रेषयिष्यामि ।''

''किं भवतः कार्यानम् अपि अस्ति ?''

''आम् । केभ्यश्चित् मासेभ्यः पूर्वम् एव क्रीतं तत् ।''

''अत्र कार्यानेन एव आगतवान् वा भवान् ?''

''न हि । अत्र तु टेक्सियानेन आगतः अस्मि । कार्यानम् अन्यकार्यनिमित्तम् अन्यत्र प्रेषितम् अस्ति ।''

''तन्नाम कार्यानं भाटकरूपेण अपि परिचाल्यते ?''

''एवं हि''

तदनन्तरं श्वेतायाः पिता आत्मानं निरोद्धुम् असमर्थः सन् ससम्भ्रमम् उक्तवान् - ''एतावत् धनं किं करिष्यति भवान् ?''

देवदत्तः चायस्य अन्तिमं चूषणं कुर्वन् उक्तवान् - ''इतोऽपि न निर्णीतम् । कस्मिंश्चित् वाणिज्ये व्यवसाये वा नियोज्यते तत् । अस्तु, अहं साधयामि तावत् ''

''इदानीम् एव ?''

''एवम् । त्वरया अन्यत्र गन्तव्यम् अस्ति मया ।''

''अये, किञ्चित् उपविशतु तावत्'' इति उक्त्वा सः श्वेताम् आहूतवान् । श्वेता तु आह्वानसमनन्तरमेव तत्र उपस्थिता । तां दृष्ट्वा तस्याः पिता उक्तवान् - ''भवत्याः शिरोवेदना किं न्यूना जाता ?''

''आम् । इदानीं किञ्चित् स्वस्थताम् अनुभवामि ।''

''अग्रिमे गुरुवासरे भवत्याः अन्यः कोऽपि कार्यक्रमः न निश्चेतव्यः । तस्मिन् दिने वयं सर्वे देवदत्तस्य नवागारप्रवेशकार्यक्रमार्थं गमिष्यामः ।''

श्वेता तु विहस्य उक्तवती - ''अयं तु नितरां समर्थः । एतस्य सामर्थ्यं तावत् विश्वविद्यालयसमयात् एव अक्षिसात्कृतम् अस्माभिः ।''

तदा श्वेतायाः माता उक्तवती - ''एतस्मिन् पर्याप्तमात्रेण क्षमता अस्ति ।''

एतत् श्रुत्वा श्वेतायाः पिता उक्तवान् - ''क्षमता अन्येषाम् अपि भवेत् कदाचित् । परन्तु एतस्मिन् अल्पे वयसि बस्यानानां ट्रक्यानानां च स्वामित्वं निश्चयेन श्लाघार्हम् । एतत्सर्वं सहजतया सौकर्येण वा न सम्भवति ।''

**(२१ पुटं पश्यन्तु)**

## कथाः अपेक्षिताः

*सम्भाषणसन्देशे प्रकाशयितुं सरलभाषया लिखिताः कथाः अपेक्षिताः । लेखकाः कथाः प्रेषयितुम् अर्हन्ति ।*

*एतत्सम्बन्धे काश्चन सूचनाः -*

* *कथाः आधुनिकजीवनसम्बद्धाः भवेयुः । (आधुनिकशैल्या रचिताः पौराणिक्यः ऐतिहासिक्यः कथाः अपि परिशीलनार्हाः भवन्ति ।)*
* *कथाः अतीव सरलया शैल्या (सन्धिरहितया) लिखिताः स्युः ।*
* *कथा फुल्स्केप्प्रमाणके पत्रे एकस्मिन् एव पृष्ठे स्फुटं लिखिता भवेत् । मुद्रिता कथा पृष्ठत्रयपरिमाणात् दीर्घा न भवेत् ।*
* *कथा लेखकेन स्वयं रचिता स्यात् । (यदि अन्यभाषातः अनूदिता अस्ति तर्हि मूललेखकस्य अनुमतिपत्रं कथया सह प्रेषणीयम् । मूललेखकस्य अनुमतिपत्रं विना प्रेषिता कथा न परिशील्यते ।)*
* *कथायाः भाषायाः शैल्याश्च परिष्कारः सम्पादकाधीनः ।*
* *अप्रकाशिताः कथाः न प्रतिप्रेष्यन्ते । (अतः लेखकाः स्वसमीपे तस्याः प्रतिकृतिमेकाम् अवश्यं रक्षेयुः ।)*
* *कथायाः प्रकाशनविषये सम्पादकमण्डलस्य निर्णयः एव प्रमाणम् ।*
* *प्रकाशितायाः कथायाः कृते उचितं गौरवधनम् अपि दास्यते ।*

**- सम्पादकः**

# There's something very Indian about a bank that puts a smile on every face.

## Indian Bank - The People's Bank. Since 1907.

*M*ore than the milestones, more than the achievements, there's something every Indian Bank Customer takes pride in – the bank's commitment to the society.

Enter the world of Banking. With Indian Bank. A world that brings quality to life in India's heartland. As well as in industrialized India.

From rural development to international banking, Indian Bank is a social movement across borders. Reaching out, creating goodwill. And opening up a world of personalised banking. Indian Bank. Moulding lives. Shaping futures.



**Indian Bank**

H.O. 31, Rajaji Road, Madras - 600 001.

ADWAVE/IB/4689 B

**A tradition in banking – Distinctly different.**

बाल मोदिनी



# कैयटस्य निस्स्पृहता

• (सं) गङ्गारामशर्मा

काश्मीरे कैयटः नाम विद्वान् वसति स्म । सः प्रतिदिनं भगवतः अर्चनं कृत्वा अनन्तरम् आदिनं शास्त्राध्ययने निरतः भवति स्म । बहुषु शास्त्रेषु निपुणः सः सर्वदा अध्ययनरतः भवति स्म इति कारणतः समयाभावात् जीविकानिर्वहणविषये किञ्चिदपि अवधानं दातुं न शक्नोति स्म । तस्य पत्नी तु अत्यन्तम् अनुकूला आसीत् । पत्युः पाण्डित्यविषये तस्याः महत् गौरवम् । सा रज्जूः निर्माय, आपणेषु ताः विक्रीय ततः प्राप्तेन अल्पेन एव धनेन कष्टेन जीवननिर्वहणं करोति स्म । केषुचित् दिनेषु तयोः आहारः केवलं जलम् एव भवति स्म । तथापि कष्टे सत्यपि तौ सर्वदा आनन्देन एव जीवतः स्म ।

कैयटस्य एतादृशीम् आर्थिक-दुरवस्थां काश्मीरराजः सचिवानां द्वारा ज्ञातवान् । 'स्वराज्ये स्थितस्य कस्यचित् शास्त्रनिपुणस्य पण्डितस्य जीवनम् एतादृशं सञ्जातम्' इति सः अतीव दुःखम् अनुभूतवान् । 'कथमपि कैयटस्य साहाय्यं करणीयम्' इति निश्चितवान् सः । अतः सः सुवर्णमुद्राः उपायनानि च स्वीकृत्य स्वयमेव कैयटस्य गृहं प्रति गतवान् । कैयटं नमस्कृत्य उक्तवान् – भोः पाण्डित ! भवतः शास्त्राध्यनेन पण्डित्येन च अहं सन्तुष्टः अस्मि । भवान् कृपया एतानि स्वीकरोतु'' इति ।

परन्तु कैयटः उक्तवान् – ''महाराज ! मम कोऽपि क्लेशः नास्ति । मम गृहे कस्यापि अभावः नास्ति । अतः अहम् एतानि न स्वीकरोमि'' इति ।

पुनः अपि महाराजः बहु अनुरोधं कृतवान् । परन्तु कैयटः तानि स्वीकर्तुं सर्वथा निराकृतवान् ।

अन्ते महाराजः एकम् उपायं चिन्तितवान् । सः उक्तवान् – ''भोः पण्डितोत्तम ! भवान् एतं विचारं जानाति एव यत् 'यस्य महाराजस्य राज्ये पण्डिताः कष्टकरं जीवनं यापयन्ति, सः महाराजः पापभाक् भवति' इति शास्त्राणि वदन्ति इति । अतः भवतः कष्टकरं जीवनं मम पापदायकं भवति'' इति ।



इदानीं 'स्वस्य कारणतः महाराजस्य पापलेपः मा भवतु' इति बुद्ध्या वा कैयटः धनम् उपायनानि च निश्चयेन स्वीकरिष्यति इति महाराजस्य चिन्तनम् आसीत् ।

महाराजस्य वचनं श्रुत्वा कैयटः क्षणकालं मौनं स्थितवान् । अनन्तरं मनसि एव कमपि निर्णयं कृत्वा उत्थितवान् । स्वपुस्तकानि लेखन-सामग्रीः च एकत्र सङ्गृह्य पत्नीम् उक्तवान् – ''भोः, काश्मीरे वासः पर्याप्तः । अत्र अस्माकं वासकारणतः एतस्य महाराजस्य पापलेपः मा भवतु । चलतु, वयम् अन्यं देशं गमिष्यामः'' इति । ततः गन्तुम् उद्युक्तः अपि अभवत् ।

महाराजः अनुक्षणं कैयटस्य पादयोः पतित्वा विनयेन उक्तवान् – ''भोः, महाशय ! मम अपराधं क्षाम्यतु । भवान् कृपया मम देशं परित्यज्य मा गच्छतु । इतःपरम् अहं कमपि निर्बन्धं न करोमि'' इति ।

कैयटः हसन् उक्तवान् – ''महाराज ! यदि भवान् मम साहाय्यं कर्तुम् इच्छति तर्हि इतःपरं कदापि स्वयम् अत्र मा आगच्छतु । भवदीयान् अन्यान् सेवकान् अपि अत्र मा प्रेषयतु । मम अध्ययने कमपि विघ्नं मा करोतु । एतदेव महत् साहाय्यम्'' इति ।

कैयटस्य निस्स्पृहतां ज्ञात्वा विस्मितः महाराजः तं नमस्कृत्य ततः प्रतिगतवान् ।

❑

# सर्वोपकारिता

• (सं) रवीन्द्रनाथगुरुः

स्वामी शिवानन्दसरस्वती ऋषीकेषे स्वर्गाश्रमे वसति स्म । सः पूर्वाश्रमे एकः प्रसिद्धः वैद्यः आसीत् । ''अहम् अप्पय्यदीक्षितस्य वंशजः'' इति सः अभिमानेन वदति स्म ।

सः बहु निर्मलहृदयः आसीत् । स्वाश्रमं प्रति कोऽपि आगच्छति चेत् सः तस्मै किमपि दत्त्वा एव प्रेषयति स्म । आगतेभ्यः पुस्तकानि, फलानि, धनं, मधुरभक्ष्यं, यत्किञ्चित् अन्यत् वा ददाति स्म सः ।

कदाचित् तं द्रष्टुं कश्चित् मिष्टान्नापणिकः आगतवान् । स्वामी शिवानन्दः गमनसमये तस्मै अपि यथापूर्वं कानिचन पुस्तकानि पञ्च रूप्यकाणि च दत्तवान् । सः आनन्देन तत् स्वीकृत्य ततः गतवान् ।

तदा तत्र विद्यमानः कश्चित् सज्जनः स्वामिवर्यं पृष्टवान् – ''स्वामिन् ! सः मिष्टान्नापणिकः अस्ति । प्रतिदिनं सः बहु धनं सम्पादयति । तस्य धनस्य आवश्यकता एव नास्ति । भवान् तस्मै धनं किमर्थं दत्तवान् ?'' इति ।

तदा स्वामी शिवानन्दः प्रतिप्रश्नं कृतवान् – ''वत्स ! वृक्षाः सर्वे फलानि यच्छन्ति । जनाः सर्वे वृक्षात् फलं स्वीकृत्य खादन्ति । कदापि वृक्षः तान् जनान् किं पृच्छति यत् भवान् दरिद्रः, उत धनिकः इति ?'' इति ।

''नास्ति खलु'' इति सज्जनः उत्तरं दत्तवान् ।

''तर्हि शृणोतु तावत् । यथा वृक्षादयः भेदभावम् अकृत्वा परोपकारिणः भवन्ति, तथैव सर्वैः मनुष्यैः अपि जीवनं करणीयम् । 'वसुधैव कुटुम्बकम्' इति भावं भाषणमात्रेण व्यवहारपथम् आनेतुं न शक्नुमः । सर्वप्रथमम् अस्माकं हृदये तादृशः भावः भवेत् । अनन्तरं क्रियायां तस्य प्रकटनं भवेत् । तदा एव अन्येषां हृदये अपि वयं तं भावं जागरयितुं शक्नुमः । वस्तुतः जनसेवा एव जनार्दनसेवा'' इति स्वामी शिवानन्दः उक्तवान् ।

एतेन उत्तरेण समाहितः सः सज्जनः पुनः कदापि तादृशं प्रश्नं न पृष्टवान् । ◆



## एवम् आसन् महान्तः

# सहनायाः पाठः

• श्रीनिवासः सिद्धान्ती



सा एका साध्वी स्त्री आसीत् । देवभक्तायां, सदाचारशीलायां च तस्यां सहनागुणः विशेषतः आसीत् । श्रद्धापूर्णायाः तस्याः कठिनोपवासादिषु व्रतेषु च विशेषासक्तिः आसीत् । रोगवशात् शयाना अपि सा व्रतोपवासादीन् विनाभङ्गम् आचरति स्म । तस्याः एकः पुत्रः आसीत् । सः सर्वदा मातुः व्रताचरणसमये श्रद्धया उत्कण्ठया च तस्याः निरीक्षणं करोति स्म ।

तेषु दिनेषु जनाः चान्द्रायण-चातुर्मास्यादीनि व्रतानि विशेषतः आचरन्ति स्म । 'दिनं यावत् उपवासं कृत्वा, अपरस्मिन् दिने सूर्यदर्शनं कृत्वा भोजनं करणीयम्' इति तु चान्द्रायणव्रतस्य नियमः । एषा माता अपि तत् चान्द्रायणव्रतं स्वीकृतवती । व्रतनियमानुसारं श्रद्धया देवं स्मरन्ती सा उपवासं कृतवती । अस्वास्थ्यवशात् सा श्रान्ता आसीत् । तथापि तस्याः व्रताचरणे शिथिलता न आगता । रात्रिं यावत् ध्याने निमग्ना भवति स्म सा ।

रात्रेः चतुर्थप्रहरे उषःकालसमये तस्याः पुत्रः उत्थितः । सः उत्थानसमनन्तरं गृहात् बहिः धावितवान् । सूर्योदयाय इतोऽपि किञ्चित् समयः आसीत् । द्वारे देहल्याम् उपविश्य सः पूर्वदिशां पश्यन् आसीत् । आकाशे बहवः मेघाः आसन् । तथापि पूर्वदिशि रक्तवर्णः स्फुटं दृश्यते स्म । किञ्चित्कालानन्तरं रक्तवर्णस्य तेजोमयस्य सूर्यगोलस्य अर्धभागः दृष्टिगोचरः अभवत् । मातुः अस्वास्थ्यवशात् क्लान्तिः वर्धिता आसीत् । 'कदा एकवारं मात्रे सूर्योदयं दर्शयामि ? तामपि भोजनं कुर्वतीं पश्यामि' इति पुत्रस्य चिन्तनम् आसीत् । सूर्यस्य उदितम् अर्धभागं दृष्ट्वा बालकः अनुक्षणं करताडनं कृत्वा मातरम् आहूतवान् । परन्तु आश्चर्यं नाम यावत् माता बहिरागतवती तावता एव सूर्यस्य पुरतः मेघाः आवृताः । अतः माता सूर्यदर्शनं कर्तुं न शक्तवती । पुत्रस्य उत्कण्ठां दृष्ट्वा मन्दहासपूर्वकं सा अन्तः गतवती ।

किञ्चित्कालानन्तरं सूर्यः पुनः दृष्टिगोचरः अभवत् । इदानीं सः पूर्णः आसीत् । बालकः पुनः मातरम् आहूतवान् । परन्तु इदानीम् अपि यावत् माता आगता तावता सः सूर्यः मेघेषु लीनः अभवत् । कार्ये निमग्ना माता पुनः अन्तः गतवती । पुनः पुनः एवमेव भवति स्म । मेघैः आवृतः आकाशः पुनः पुनः सूर्यं गोपयति स्म । माता बहुवारं कष्टेन बहिरागत्य गच्छति स्म । एतादृश्यां कष्टस्थितौ अपि तस्याः मुखे मन्दहासः, शान्तिः च स्फुटा आसीत् ।

बहुकालः अतीतः । मातरं पश्यन् बालकः सहजतया तां पृष्टवान् – "अम्ब ! भवत्याः बुभुक्षा नास्ति वा ? सूर्यः तु उदितः । किन्तु सः भवत्या न दृष्टः । अतः अग्रे किम् ?" इति ।

तदा माता उक्तवती – "अग्रे किम् इति भगवान् एव निर्णयं करोति । व्रतं तु स्वीकृतम् एव । यावत् वा कष्टं भवतु, अहं सहनया एव व्यवहरामि । भगवतः इच्छा यथा अस्ति तथा भवतु नाम । प्रायः अद्य मम भोजनस्करणं

भगवतः इष्टाय न जातम् इति मन्ये । तस्य इच्छा यथा अस्ति तथा भवतु'' इति ।

एतत् श्रुत्वा तस्याः पुत्रः पृष्टवान् - ''अम्ब ! एतेन भवत्याः असन्तोषः न भवति वा ?'' इति ।

''असन्तोषः किमर्थम् ? सहनायाः अभ्यासार्थम् एषः कश्चन अवकाशः इति अहं चिन्तयामि'' इति उक्तवती माता ।

एवं बालकः मातृसकाशात् सहनां पठितवान् । 'आत्मनः शुद्ध्यर्थम् आत्मनः विकासार्थम् च व्रतं करणीयम्' इति विषयं ज्ञातवान् सः ।

भाविजीवने सः लोककल्याणार्थम् उपवासव्रतादिकं बहुवारं कृतवान् । किन्तु कदापि एतन्निमित्तं खेदं श्रान्तिं च न अनुभूतवान् ।

एतं सहनापाठं बाल्ये एव प्राप्तवान् सः महापुरुषः एव महात्मा गान्धी । आचरणद्वारा सहनापाठं बोधितवती सा माता एव पुतलीबायी ।



*प्रियबालाः,*

***बालमोदिनीविभागः भवताम् एव । एतस्मिन् विभागे प्रकाशनार्थम् उत्तमाः कथाः, महात्मनां वचनानि, महात्मनां जीवनघटनाः इत्यादीन् प्रेषयितुम् अर्हन्ति भवन्तः । लेखने दोषाः सम्भवन्ति इति चिन्तां मा कुर्वन्तु । दोषान् परिष्कृत्य प्रकाशयिष्यामः वयम् । धैर्येण लिखित्वा प्रेषयन्तु ।***

## क्षणं हसन्तु

कश्चित् आरक्षकः चौर्यं कुर्वन्तं कश्चित् चोरं गृहीतवान् । चौरेण बहुधा प्रार्थना कृता चेत् अपि आरक्षकः तं विमोक्तुं न अङ्गीकृतवान् । अन्ते चोरः उक्तवान् -

''पश्यतु महाशय ! अहं तु कारागृहम् आगन्तुं सज्जः एव अस्मि । किन्तु अहं पादरक्षे विस्मृत्य आगतवान् अस्मि । ते धृत्वा आगन्तुम् अनुमतिं ददातु'' इति ।

आरक्षकः उक्तवान् - ''शीघ्रम् आगच्छतु । अहम् अत्रैव प्रतीक्षां करोमि'' इति । गतः चोरः न प्रत्यागतवान् एव ।

पुनः कदाचित् सः एव चोरः तेन एव आरक्षकेण पुनरपि गृहीतः । इदानीं चोरः उक्तवान् - ''भोः महाशय ! गृहे मम पत्नी अस्ति । ताम् उक्त्वा आगच्छामि, कृपया अनुमतिं ददातु'' इति ।

आरक्षकः - ''भोः, पूर्वं यथा भवान् मां वञ्चितवान्, तथा इदानीं कर्तुं न शक्नोति । अहमपि बुद्धिमान् अस्मि । भवान् एव अत्र तिष्ठतु । भवतः पत्नीम् अहम् एव सूचयित्वा आगमिष्यामि'' इत्युक्त्वा तस्य गृहं प्रति धावितवान् एव ।



# निकषोपलः १९

● जि. महाबलेश्वरभट्टः

## शब्दज्ञानवतां परीक्षास्थलम्, अन्येषां शब्दसङ्ग्रहमूलम्

*अत्र प्रतिमासं चतुर्दश शब्दाः दीयन्ते । एकैकस्य अपि शब्दस्य चत्वारः अर्थाः लिख्यन्ते । चतुर्षु एकतमः एव अर्थः साधुः भवति । कतमः तत्र साधुः अर्थः इति एतस्य पत्रस्य पृष्ठभागे एव उदाहरणसहितं निरूपितम् अस्ति । आदौ तावत् भवन्तः अन्यतमम् अर्थं विचिन्त्य निर्वाचयन्तु । ततः पृष्ठभागं पश्यन्तु ।*

**१. विषाणः (पुं. स्त्री. न.)**
(अ) विषादः (आ) पाषाणः
(इ) शृङ्गम् (ई) विषण्णः

**२. मृगतृष्णिका (स्त्री)**
(अ) मृगया (आ) मरीचिका
(इ) ईहामृगः
(ई) अन्वेषणेच्छा

**३. शम् (न)**
(अ) सुखम् (आ) समाप्तिः
(इ) शमः (ई) नाशः

**४. स्तबकः (पुं)**
(अ) स्तावकः (आ) गुच्छकः
(इ) स्तोत्रम् (ई) स्थितिः

**५. शाणः (पुं)**
(अ) निकषोपलः
(आ) शुष्कः (इ) क्षीणः
(ई) खिन्नः

**६. केसरी (पुं)**
(अ) कुत्सितं सरः
(आ) हनूमान् (इ) सिंहः
(ई) परागः

**७. आखुः (पुं)**
(अ) खनित्रम्
(आ) आख्यानम्
(इ) आगन्तुकः (ई) मूषकः

**८. शाद्वलम् (वि)**
(अ) शात्रवम्
(आ) हरिततृणमयप्रदेशः
(इ) पङ्कः (ई) शैवालम्

**९. असिः (पुं)**
(अ) असितः (आ) असक्तः
(इ) असह्यः (ई) खड्गः

**१०. पर्यङ्कः (पुं)**
(अ) मञ्चः (आ) सीमान्तः
(इ) शय्या (ई) परितः

**११. छद्म (न)**
(अ) छत्रम्
(आ) एकान्तः (इ) पर्णम्
(ई) कपटः

**१२. कन्था (स्त्री)**
(अ) पन्थाः (आ) दुर्मार्गः
(इ) जीर्णवस्त्रम्
(ई) हन्ता

**१३. बालिशः (वि)**
(अ) बाल्यम् (आ) मूर्खः
(इ) बलवान्
(ई) बलात्कारः

**१४. ह्रीः (स्त्री)**
(अ) सम्पत् (आ) भयम्
(इ) सन्तोषः (ई) लज्जा

भाषा

### प्रत्ययान्तात् प्रत्ययः

अनन्तानि संस्कृतपदानि । तानि सर्वाणि समुपेतानि प्रकृत्या प्रत्ययेन च । प्रत्यया अपि नाना । प्रकृतयोऽपि अनेकाः । प्रत्ययाः प्रकृतेः परे भवन्ति । किन्तु प्रत्ययान्तात् परः पुनः प्रत्ययो न भवति ।

अयि भवन् ! प्रत्ययान्तादपि प्रत्ययः श्रूयते ननु ! पाचक इति कृत्प्रत्ययान्तः । तस्मात् सुप्रत्ययो दृश्यते एव पाचक इत्यत्र । एवमेव पठनीयः, गतः, दाशरथिः, राष्ट्रियः इत्यादावपि ।

अये ! मुहूर्तं तिष्ठ, इदञ्च शृणु । प्रत्ययः अर्थं पुरस्कृत्यैव प्रवर्तते । प्रवर्तमानश्च सः एकस्मिन्नर्थे एक एव । 'पाचक' इत्यत्र कृत्प्रत्ययस्य अर्थः कर्ता । सुप्रत्ययस्य अर्थः प्रातिपदिकम् । न हि अनयोः द्वयोरपि प्रत्यययोरेकार्थता । त्वया प्रदर्शितेषु अन्येष्वपि उदाहरणेषु न समानार्थकौ प्रत्ययौ । प्रत्ययान्तात् पुनः प्रत्ययो न भवति इति वक्तुः मम एष आशयो यत् न ह्येकमर्थमवगमयितुं द्वौ प्रत्ययौ प्रवर्तेयाताम् इति ।

ननु भोः, किमेतानि पदानि न कर्णपथमारूढानि, येषु एकस्मिन्नेवार्थे द्वयोः प्रत्यययोः श्रवणं भवति, किं बहुना त्रयाणामपि प्रत्ययानां दर्शनं भवति क्वचित् । तानि च पदानि सन्ति - "गार्ग्यायणी, सांराविणं, व्यावक्रोशी" इत्यादीनि । गर्गो नाम कश्चित् । तस्य गोत्रापत्यं स्त्री = गार्ग्यायणी । अत्र ष्फप्रत्ययः (फ=आयन्) ङीष् प्रत्ययश्च स्तः । द्वावपि स्त्रीलिङ्गमेव बोधयतः । समन्तात् शब्दः = सांराविणमित्युच्यते । अत्र इनुण्प्रत्ययः (इन्) अण्प्रत्ययश्च स्तः । द्वयोरपि भावरूपः एक एवार्थः । व्यावक्रोशी = परस्परनिन्दनमित्यर्थः । अत्र णच्प्रत्ययः अञ्प्रत्ययः ङीप्प्रत्ययश्चेति त्रयः प्रत्ययाः एकस्मिन्नेवार्थे विलसन्तितराम् । यतः त्रयोऽपि स्त्रीलिङ्गमेव बोधयन्ति ।

अहो ! श्लाघनीयमेव आयुष्मता कृतं परिशीलनम् । शिष्टैः एतादृशाः शब्दाः प्रयुक्ताः । न चैतावता एकस्मिन्नेवार्थे प्रत्ययपरम्परा प्रयोक्तुं शक्या । क्वचिदेव इति नियमनं कृतं पाणिनिना । सम्प्रति तु पाणिनिसूत्रमेव प्रमाणम् अस्माकम् ।

# एष निर्णयः.....

१. **विषाणः** = (इ) शृङ्गम् । ''अतस्त्रिषु विषाणं स्यात् पशुशृङ्गेभदन्तयो'' अमरः ।
उदा - १. विषाणेनोल्लिखन् दर्पात्तद्वारं द्विरदो यथा । (रामायणम् कि.का.११.२७)
२. पश्य ! दीर्घौ ऋजू च विषाणौ वृषभस्यास्य ।

२. **मृगतृष्णिका** = (आ) मरीचिका । ''मृगतृष्णा मरीचिका'' (अमरः) मृगतृष्णा एव मृगतृष्णिका ।
उदा - १. पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः । (नीतिशतकम्, ४)
२. घर्मकाले मध्याह्ने सूर्यातपः मरुभूमौ दूरतः सलिलमिव भासमानः मृगतृष्णिका इत्युच्यते ।

३. **शम्** = (अ) सुखम् । ....''शं सुखे क्लीबे शास्त्रे श्रेयसि मङ्गले'' (नानार्थरत्नमाला)
उदा - १. हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा । (नीतिशतकम् ।।)
२. सर्वेभ्यो ददातु शं भगवान् शङ्करः ।

४. **स्तबकः** = (आ) गुच्छकः । ''स्याद्गुच्छकस्तु स्तबकः'' (अमरः)
उदा - १. स्तबकैः पवनोत्क्षिप्तैः तर्जयन्निव मां स्थितः । (रामायणम् .कि.का.१.५९)
२. पुष्पिताः स्तबकाः कस्मै न रोचन्ते ?

५. **शाणः** = (अ) निकषोपलः । ''शाणस्तु निकषः कषः'' (अमरः)
उदा - १. मंणिः शाणोल्लीढः समरविजयी हेतिदलितः । (नीतिशतकम् .६)
२. शाणेन हिं परीक्ष्यते सुवर्णम् ।

६. **केसरी** = (इ) सिंहः । ''सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः'' (अमरः)
उदा - १. किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी । (नीतिशतकम् .१३)
२. केसरिणां सन्ततिः क्षीणामवस्थामापन्ना ।

७. **आखुः** = (ई) मूषकः । ''उन्दुरुर्मूषिकोप्याखुः'' (अमरः)
उदा - १. भक्ष्याशया हि मञ्जूषां दष्ट्वाखुस्तेनभक्षितः । (चन्द्रालोकः)
२. मार्जालेभ्योऽपि स्थूलतराः आखवः दृश्यन्ते, येभ्यो मार्जाला एव बिभ्यति ।

८. **शाद्वलम्** = (आ) हरिततृणमयप्रदेशः । 'शाद्वलः शादहरिते' (अमरः)
उदा - १. नह्येवं रमणीयेषु शाद्वलेषु तया सह (रामायणम् .कि.का. १.९७)
२. विरलं गतेषु शाद्वलेषु क्व वा चरेयुः गावो महिष्यश्च ।

९. **असिः** = (ई) खड्गः । ''...खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः'' (अमरः)
उदा - १. सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् । (नीतिशतकम्)
२. नेदानीम् असिना युद्धं प्रवर्तते ।

१०. **पर्यङ्कः** = (अ) मञ्चः । ''...मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः'' (अमरः)
उदा - १. क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनम् । (नीतिशतकम्.१८)
२. काष्ठेनापि निर्मीयते पर्यङ्कः, अयसापि । किन्तु काष्ठमयः पर्यङ्कः शोभतेतराम् ।

११. **छद्म** = (ई) कपटः । ''कपटोऽस्त्रिव्याजदम्भोपधयश्छद्मकैतवे'' (अमरः)
उदा - १. छद्मना चीरवसनौ प्रचरन्ताविहागतौ । (रामायणम् कि. का. २.६)
२. प्रायः राजकीयाः पुरुषाः छद्मना एव व्यवहरन्ति ।

१२. **कन्था** = (इ) जीर्णवस्त्रम् । ''कन्थामृन्मयभित्तौ च तथाप्रावरणान्तरे'' (मेदिनी)
उदा - १. क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरः ।
२. अहो ! मार्गे पतितां कन्थामप्यादाय आदाय गच्छन्ति एते ।।

१३. **बालिशः** = (आ) मूर्खः । ''अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः'' (अमरः)
उदा - १. कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः (रामायणम् .कि.का.११.५०)
२. कथं बालिश इव आचरति भवान् ।

१४. **ह्रीः** = (ई) लज्जा । ''मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा''...(अमरः)
उदा - १. ह्रीर्मद्याद्, अनवेक्षणादपि कृषिः, स्नेहः प्रवासाश्रयात् । (नीतिशतकम् २२)
२. ह्रिया देयं, न दर्पेण न वानादरेण ।

**परीक्षापरिणामः**

निर्वाचितस्य एकैकस्य साधुशब्दार्थस्य एकैकः अङ्कः । स्वयमात्मा परीक्ष्यताम् । आहत्य चतुर्दश अङ्काः । भवन्तः श्रेणीं स्वयं निश्चिन्वन्तु ।

| | | |
|---|---|---|
| १२ - १४ अङ्काः | - | प्रथमश्रेणी |
| ०९ - ११ अङ्काः | - | द्वितीयश्रेणी |
| ०६ - ०८ अङ्काः | - | तृतीयश्रेणी |

## आषाढस्य प्रथमदिवसे

*(१३ पुटतः अनुवृत्तम्)*

श्वेता देवदत्तं पृष्टवती - ''किम् एतत् सर्वं सत्यम् ?''

तदा देवदत्तः उक्तवान् - ''यदि भवती अत्र विश्वासं कर्तुं न इच्छति तर्हि मा करोतु । परन्तु तेन किम् ?''

अत्रान्तरे श्वेतायाः पिता आसनात् उत्थितवान् । तस्याः माता अपि सोफासनात् उत्थाय उक्तवती - ''भवन्तौ वार्तालापं कुरुताम् । वयम् अन्यत् कार्यं पश्यामः ।''

देवदत्तः उक्तवान् - ''यदि भवन्तौ कामपि आपत्तिं न अनुभवतः तर्हि अहं श्वेतां किञ्चित्कालं विहारार्थं नेतुम् इच्छामि ।''

''का वा आपत्तिः ? ताम् अवश्यं नयतु भवान् ।''

श्वेतायाः माता पृष्टवती - ''कुत्र गमनं भवतोः ?''

''चलच्चित्रं द्रष्टुम्''

''चलच्चित्रम् ! परन्तु प्रत्यागमनसमये विलम्बः न करणीयः । अधिका रात्रिः न स्यात् ।''

''न हि । रात्रितः पूर्वम् एव प्रत्यागमनं भविष्यति ।''

तदा श्वेता उक्तवती - ''परन्तु अहं गन्तुं न शक्नोमि । यतः सायङ्काले मम सखी काचित् अत्र आगमिष्यति ।''

''समागच्छतु नाम'' श्वेतायाः पिता उक्तवान् - ''अहं तां प्रवृत्तं सर्वं वदिष्यामि । देवदत्तस्य वचनं पुरस्करणीयं भवत्या । किं तस्य वचनस्य किमपि महत्त्वं नास्ति ? अतः भवती अवश्यं देवदत्तेन सह भ्रमणार्थं गच्छतु ।''

तदनन्तरं श्वेतायाः माता पिता चापि पार्श्वस्थं प्रकोष्ठं गतवन्तौ । श्वेता देवदत्तम् उक्तवती - ''अहं वस्त्रपरिवर्तनं कृत्वा आगच्छामि ।''

''त्वरया आगच्छतु । विलम्बः न करणीयः ।''

श्वेता वस्त्रपरिवर्तनार्थं ततः निर्गता । देवदत्तः किञ्चित्कालं यावत् तत्र एकाकितया उपविष्टः आसीत् । अचिरात् एव बहिर्गमनयोग्यं वस्त्रं धृत्वा अलङ्कारं च समाप्य आगता श्वेता उक्तवती - ''गच्छाम तावत् ।''

देवदत्तः श्वेतया सह बहिर्गतवान् । गृहात् बहिः आगत्य सः आकाशं दृष्टवान् । आषाढस्य मेघानां माला आकाशम् आवृतवती आसीत् । कस्मिंश्चित् अपि क्षणे वृष्टिः सम्भाव्यते स्म ।

देवदत्तः धावन् गत्वा एकं टेक्सीयानं समाहूय तस्मिन् उपविशन्, श्वेताम् आहूय उपवेश्य यानचालकम् असूचयत् - ''चौपाटी-समुद्रतीरं प्रति गच्छतु ।''

टेक्सीयानं वेगेन गच्छति स्म । अत्रान्तरे वृष्टिः आरब्धा । वृष्टिजलस्य दर्शनात् देवदत्तस्य मानसोद्वेगः उपशान्तः । इदानीं तस्य चित्तस्य सर्वोऽपि विकारः परिसमाप्तः । मनसः अन्यथाभावः अपि तिरोहितः । तेन अनुभूतं यत् 'मन्दं मन्दं नुदति पवनश्चानुकूलः .....'

वर्षन्तं मेघं दृष्ट्वा सः मनसि एवम् अचिन्तयत् - 'सन्तप्तानां त्वमसि शरणं तत्पयोद ! प्रियायाः सान्निध्यं मे भवतु नितराम्.....'

अथ च देवदत्तः इदमपि चिन्तयति स्म - 'किञ्चित्कालानन्तरं तन्नाम प्रत्यागमनकाले अहं श्वेतां वस्तुस्थितिं वक्ष्यामि' इति । ◻◻

ಜಯ ಭಾರತ ಜನನಿಯ ತನುಜಾತೆ
ಜಯ ಹೇ ಕರ್ನಾಟಕ ಮಾತೆ

ಕೃಷ್ಣ, ತುಂಗೆ, ಕಾವೇರಿ ನದಿಗಳ
ಕಲರವದ ಚೆಲುವ ಈ ನಾಡು ಧನ್ಯ.

ಭವ್ಯ ಸಂಸ್ಕೃತಿ, ವಿಶಿಷ್ಟ ಪರಂಪರೆ
ಸುದೀರ್ಘ ಚರಿತ್ರೆಯ ಕನ್ನಡ ನಾಡಿನ ಜನರೇ ಧನ್ಯ.

ತಪೋಭೂಮಿ, ಪಾವನಭೂಮಿ
ಸುಖಶಾಂತಿ, ಸಹಬಾಳ್ವೆಯ ಜೇನುಗೂಡು
ಈ ಕರ್ನಾಟಕ ನಿಜಕ್ಕೂ ಧನ್ಯ.

ಬನ್ನಿ.... ಸಮೃದ್ಧ, ಸಂಪದ್ಭರಿತ, ಸ್ವಾಭಿಮಾನಿ
ಕರ್ನಾಟಕ ಕಟ್ಟಲು ಒಂದಾಗಿ ದುಡಿಯೋಣ.

- ಕರ್ನಾಟಕ ವಾರ್ತೆ



# पदरञ्जिनी १९

● म. विजयलक्ष्मीः



## वामतः दक्षिणम् -

१. पूर्वं जातः यः तस्मै सहोदराय अग्रस्थानं ददातु । (४)
३. राधा बालिकायाः समीपे अस्ति । (३)
४. वात्सल्यमयी धेनुः कस्याः निरीक्षणं करोति ? (३)
६. रात्रौ जीवने (जले) स्थितेन पुष्पेण भगवान् अर्चनीयः । (४)
८. वैयाकरणः प्रयत्नेन आसु क्रियासु ज्ञानं प्राप्नुयात् । (४)
१०. कारेषु भावानां शमनं कश्चन प्रकारः । (४)
१२. नारीषु कस्याः स्वर्गलाभः ? (४)
१६. वीराः चित्राः नागरिकाः तरङ्गेण तुष्यन्ति । (३)
१७. शाब्दबोधे प्रयुज्यमाना एषा वृत्तिः लक्षणसम्पन्ना । (३)
१८. मायाविनी एषा शम्बरासुरस्य पत्नी । (४)

## उपरिष्टात् अधः -

१. अनिलः कार्ये लवमात्रेण सिद्धिं न प्राप्तवान् । यतः स असमयः । (३)
२. यवेन सह अन्यदेशीयः कश्चन अस्ति । (३)
३. चन्द्रपीडकाय केतुमित्राय नमः । (३)
५. क्रियमाणे कार्ये कस्याः प्राधान्यं परिवृत्तम् अस्ति ? (३)
६. राजा जनानां समूहे भासते । किन्तु सा विद्वद्भिः, सचिवैः, राज्ञा च शोभते । (४)
७. नववधूवरयोः नूतना शोभा प्रसरति । (४)
८. प्रकर्षेण कनकम् अल्पत्वं त्यक्त्वा निर्माणकार्ये स्त्रीत्वेन सिद्धं भवति । (४)
९. सुलभतया खे वायुः वाति । तेन अस्माभिः सौकर्यम् आप्यते । (४)
११. शम्भोः पत्नी उभयत्र दीर्घेण विराजते । (३)
१३. अरुणा दयागुण-सम्पन्ना । (३)
१४. अनाथस्य नास्ति माता । अतः तस्य नाम अपि नास्ति । (३)
१५. माला-लतयोर्मध्ये ईकारान्तं पुष्पम् । (३)

## पदरञ्जिनी - १८ - उत्तराणि

| उपरिष्टात् अधः - | वामतः दक्षिणम् |
|---|---|
| १. नागारिः | १. नारायणम् |
| २. णम्यसा (सायणम्) | ३. आपगा |
| ३. आदाय | ४. यशसा |
| ५. सात्वती | ६. अवयवी |
| ६. अनामिका | ८. सतीदेवी |
| ७. वीरसेनः | १०. कात्यायनः |
| ८. सभर्तृका | १२. कालकेयः |
| ९. वीतभयः | १६. नारदः |
| ११. यमुना | १७. वारिता |
| १३. ललिता | १८. वीणानादः |
| १४. यादवी | |
| १५. विवादः | |

### शीर्षिकासमस्यायाः - (१५) उत्तराणि

१. केशालङ्करणम् ।
२. नासिकाभरणम् ।
३. अङ्गीरसवंशस्थः ।
४. मोहकमुद्रणम् ।
५. परिवर्तितपक्षः ।
६. तीरमन्दारवृक्षः ।

| स | मु | द्र | ती | र | स्थः |
|---|---|---|---|---|---|

| ना | रि | के | ल | वृ | क्षः |
|---|---|---|---|---|---|

## शीर्षिकासमस्या - १६

१ न्ति दे व धि अ पः शा

२ र यु ष्णुः म वि क्तः या

३ द न्ति प्र नम् मं र्श अ

४ हि द्वा पि नि रा ता णि

५ त रि लम् र भ फ स

६ णम् ण स्म रा य ना र

उपरि षट् अक्षरसमूहाः निर्दिष्टाः । तेषु स्थितानाम् अक्षराणां समुचितरीत्या संयोजनेन पदरचना करणीया । तेषु पदेषु स्थितानां विशेषाक्षराणां योजनेन पार्श्वे स्थितस्य विचित्रस्य चित्रस्य योग्या शीर्षिका रचनीया । रिक्ते स्थले सा लेखनीया च ।



# पश्चिमे जातः अपश्चिमः डेविड् फ्राली



• चारुदत्तः

**जन्मना पाश्चात्यः एषः वेदविद्वान् वामदेवशास्त्री - इत्यपरनाम्ना प्रसिद्धः । संस्कृतवाङ्मये तत्रापि विशिष्य वैदिकवाङ्मये कृतपरिश्रमेण एतेन तद्विषये दशाधिकाः ग्रन्थाः रचिताः ।**

'पाश्चात्यां भौतिकजीवनशैलीम् अनुसरन् भारतीयः समाजः स्वकीयम् अन्तस्सत्त्वं विस्मरन् अस्ति' इति कश्चन प्रवादः एषु दिनेषु अधिकतया श्रूयते । एतद्विपरीतरूपेण, भारतीयजीवनैल्या आकृष्टाः सन्तः, तस्याः अन्तरङ्गम् अवगन्तुम् इच्छन्तः तद्विषये अध्ययनरताः पाश्चात्याः अपि विरलतया तत्र तत्र दृश्यन्ते । एतादृशेषु विरलेषु अन्यतमः अस्ति डेविड् फ्राली ।

डेविड् फ्राली १९५० तमे वर्षे अमेरिकायाः विस्कान्सिन् संस्थानस्य कस्मिंश्चित् नगरे जातः । अतीवसाम्प्रदायिके क्याथोलिक्क्रैस्तपरिवारे जातः सः स्वविद्यार्थिदशायां भारतं दारिद्र्यग्रस्तः, अत्यधिकजनसंख्यायुक्तः, अनभिवृद्धः विशालः कश्चन देशः इति चिन्तितवान् आसीत्। क्रैस्तधार्मिककेन्द्रेषु प्रचलतः राजकीयान् अव्यवहारान् ज्ञात्वा निराशः सन् सः चतुर्दशे वयसि ततः बहिः आगतवान् । आध्यात्मिकीम् आसक्तिं वहता तेन प्रथमं यूरोपीयसाहित्यम् अधीतम् । विद्यालयेषु तस्य अध्ययनं तु नाममात्रम् आसीत् । अन्यत् सर्वं तेन स्वयमेव अधीतम् । अनन्तरकाले सः हिन्दुत्वेन आकृष्टः । हिन्दुविचारैः प्रभावितः सन् सः योगस्य ध्यानस्य च अभ्यासम् अपि कृतवान् । अमेरिकायां यद्यपि तेन बहवः आध्यात्मिकगुरवः दृष्टाः तथापि सः न सहाहितः । तत्पश्चात् सः रामकृष्णपरमहंसः, रमणमहर्षिः, महर्षिः अरविन्दः, आनन्दमयी - इत्यादीनां भारतीयानाम् आध्यात्मिकगुरूणां विचारान् अधीतवान् । शङ्कराचार्याणां ग्रन्थान् अधीत्य अद्वैतसिद्धान्तं ज्ञातवान् ।

वेदानाम् उपनिषदां च विषये तस्य कुतूहलम् अधिकं जातम् । वैदिक-ऋषीणां मन्त्रद्रष्टॄणां मूलचिन्तनं किम् आसीत् इति ज्ञातव्यम् इति तस्य जिज्ञासा उत्पन्ना । म्याक्समुल्लरप्रभृतिभिः पाश्चात्यविद्वद्भिः कृतः वेदोपनिषदाम् अनुवादः न तथा प्रामाणिकः इति मत्वा 'संस्कृतभाषया रचिता ग्रन्थाः संस्कृतेन एव पठनीयाः इति, तदर्थमेव संस्कृताभ्यासं कृतवान् सः । ऋग्वेदविषये गभीरम् अध्ययनं तेन कृतम् । न केवलं तावता तृप्तः सः वेदानाम् उच्चारणम् अपि ज्ञातव्यम् इति बुद्ध्या साम्प्रदायिकक्रमेण अपि वेदाध्ययनं कृतवान् । अनन्तरं तेन ग्रन्थरचनम् आरब्धम् । एतावता तेन वेदोपनिषदां विषये, हिन्दुत्वविषये, आर्याक्रमणवादविषये, आयुर्वेदविषये च दशाधिकाः ग्रन्थाः प्रकाशिताः । तत्कारणतः एव सः अल्पेनैव कालेन पाश्चात्यविद्वन्मण्डले विख्यातः जातः ।

प्रकृतं डेविड् फ्राली अमेरिकायां न्यूमेक्सिको संस्थानस्य सन्ता फे इत्यत्र विद्यमानायाः American Institute of Vedic Studies इत्येतस्याः संस्थायाः निर्देशकः अस्ति । वर्षद्वयात् पूर्वं केनडायाः ओट्टावानगरे विद्यमानया International Institute of Indian Studies इत्येतया संस्थया वेदव्यासपुरस्कारेण सः पुरस्कृतः । स्वकीयम् अध्ययनं निमित्तीकृत्य तदा तदा भारतेऽपि सः प्रवासं करोति । मासत्रयात् पूर्वं बेङ्गलूरुनगरं प्रति आगतवतः तस्य भाषणकार्यक्रमः अपि तत्र प्राचलत् । तस्मिन् सन्दर्भे सः 'सन्देश' सम्पादकैः मिलितः आसीत् । तेन सह सम्भाषणसन्दर्भे, तस्य भाषणसन्दर्भे, तेन रचितेषु ग्रन्थेषु तत्र तत्र च तेन प्रकटिताः अभिप्रायाः अत्र सङ्गृहीताः सन्ति ।

**पाश्चात्यविद्वद्भिः कृतः अनुवादः**

आधुनिककाले विशेषतया १९ तमशतकस्य उत्तरार्धे, २० तमशतकस्य पूर्वार्धे च पाश्चात्यैः वेदानाम् अध्ययनं कृतम् । म्याक्स् मुल्लरः, कीथः ग्रिफिथः, विल्सनः - इत्यादयः तत्र प्रमुखाः । परन्तु यद्यपि एते विद्वांसः वेदविषये विदेशीयानाम् अवधानम् आक्रष्टुं समर्थाः जाताः तथापि ते सर्वे एतान् प्राचीनग्रन्थान् पूर्णतया अवगन्तुं शक्तवन्तः इति वक्तुं न शक्यते । वेदेषु निहितस्य गूढार्थस्य अपेक्षया तेषां दृष्टिः उपरितनस्वरूपस्य विषये, तस्य अनुवादविषये एव आसीत् । तस्य स्तरोऽपि अतीव प्राथमिकः आसीत् । वेदार्थानाम् अवगमने यत्र

समस्याः उद्धृताः तत्र तैः स्व-अनवगतेः कारणम् अविचिन्त्य, 'वैदिकानाम् अस्पष्टचिन्तनस्य फलमिदम्' इति निर्णीतम् । दोषः वैदिकमन्त्रद्रष्टृषु आरोपितः, न तु स्वात्मावलोकनं कृतम् । भौतिकदृष्ट्या, बौद्धिकदृष्ट्या तैः वेदाः दृष्टाः न तु तदर्थम् अपेक्षितया आध्यात्मिकदृष्ट्या । अतः एव ते वेदानां वास्तविकम् अर्थं ज्ञातुं न शक्ताः । तैः कृतः अनुवादः अपि न तथा प्रामाणिकः ।

**वैदिकवाङ्मयस्य अध्ययने मम दृष्टिः**

वेदेषु विद्यमानः यः कोऽपि विचारः अतार्किकः इति यदि भासते तर्हि तं विषयम् अहम् तथैव न अङ्गीकृतवान् । सा च अतार्किकता कदाचित् मन्त्रद्रष्टृणां वैदिकमनसः पृष्ठभूमिकां ज्ञातुम् अपर्याप्तायाः मम अल्पमतेः परिणामः स्यात् इति विचिन्त्य तां पृष्ठभूमिकाम् अवगन्तुं गभीरं प्रयत्नं करोमि । अर्वाचीनचिन्तनानुसारमेव प्रवर्तमाने, बाह्यार्थग्रहणैकतत्परे आधुनिकानां मनसि प्राचीनानाम् भाषाम् अवगन्तुम् अपेक्षिता अन्तर्दृष्टिः नास्ति इति अहम् अनुभवामि । ताम् अन्तर्दृष्टिं प्राप्तुम् अहं प्रयत्नं करोमि । आधुनिकं बौद्धिकं मनः अत्याधिकं भौतिकं विज्ञानप्रभावितं च अस्ति । तस्मात् वैदिकानां पारमार्थिकाणां ग्रन्थानाम् अवगमने तस्य मनसः क्षमता मर्यादिता एव अस्ति । अतः परम्पराभिमुखीं दृष्टिं प्राप्तुम् अहं प्रयत्नशीलः अस्मि ।

**प्राचीनभारतीयः इतिहासः**

नवदशशतके यः भारतीयेतिहासः लिखितः तत्र बहवः मिथ्यांशाः सन्ति इति इदानीम् अनेके पाश्चात्याः विद्वांसः अङ्गीकुर्वन्ति । आर्याक्रमणवादः तु बहुभिः स्पष्टतया निराकृतः अस्ति । मेहरगढे उपलभ्यमानाः अवशेषाः स्मारयन्ति यत् वैदिकसंस्कृतेः कालः ७००० तः अपि पुरातनः इति । अधिकाः पाश्चात्याः एतेन अभिप्रायेण सहमताः सन्ति ।

परन्तु दौर्भाग्यवशात् मार्क्सवादस्य अनुयायिनः भारतीयाः इतिहासकाराः इतिहासे विद्यमानस्य वर्गसङ्घर्षस्य कारणं विवरीतुम् अर्याक्रमणवादं प्रमाणरूपेण स्वीकुर्वन्ति । ते एतं नूतनं विचारम् अङ्गीकर्तुं न इच्छति येन स्वस्य राजकीयं स्थानं दोलायमानं भवेत् इति तेषां भयम् अस्ति । एतादृशाः वामवादिनः इतिहासकाराः एव इदानीम् भारते सामर्थ्यवन्तः सन्ति । परन्तु उपलब्धानि दृढानि प्रमाणानि दशवर्षाभ्यन्तरे एव तान् पदच्युतान् कर्तुं शक्नुयुः । तदा प्रामाणिकः दोषरहितः इतिहासः अनावृतः भविष्यति ।

**संस्कृतभाषा**

शास्त्रीयं संस्कृतं पाणिनिना क्रिस्तात् ५००० वर्षेभ्यः पूर्वमेव सूत्रबद्धं कृतम् । तस्याः अष्टाध्याय्याः भाषावगमनार्थम् अद्यापि अध्ययनं प्रचलति । पाणिनिना दर्शितं भाषास्वरूपं सङ्गणकयन्त्रे उपयोगार्थम्



सर्वाधिकं शास्त्रीयम् इति इदमिदानीं संशोधितम् । एवं संस्कृतभाषा भूतस्य भविष्यतः च भाषा अस्ति । सा वैश्विकसंस्कृतेः नवयुगस्य भाषा अपि । भविष्यति काले मानवता संस्कृतभाषां प्रति एव प्रतिनिवर्तिष्यते । अन्यच्च संस्कृतभाषायाः शक्तिः तस्याः उच्चार्यमाणेषु शब्देषु अस्ति । अतः अस्माभिः संस्कृतसम्भाषणम् अवश्यं ज्ञातव्यम् ।

**भारतीयेषु निवेदनम्**

भवदीया आत्मिकपरम्परा मानवतायाः सुमहान् निधिः अस्ति । कृपया तां पोषयन्तु, रक्षन्तु, व्यवहारे आनयन्तु, अन्येभ्यः वितरन्तु च । आर्थिकदृष्ट्या, राजकीयदृष्ट्या च हिन्दुसंस्कृतौ या कापि न्यूनता स्यात् नाम, सा वेदानां सामर्थ्यस्य विस्मरणे कारणीभूता न भवेत् । वेदाः तु सूर्यसदृशाः । तेषु समग्रविश्वस्य अपेक्षितस्य प्रकाशस्य, प्रेम्णः, जीवनस्य च कुञ्चिका अस्ति, यया सर्वविधाः समस्याः निवारिताः भवेयुः । वयम् अस्माकं प्राचीनदायं न विस्मरेम । येषां वेदज्ञानविषये आसक्तिः अस्ति ते कृपया तेषाम् अध्ययनं कुर्वन्तु, तेषां रक्षणार्थं यत्नं कुर्वन्तु । ❑



*बेङ्गलूरुनगरे सपीतिगोष्ठ्यां (चायपानगोष्ठ्यां) डेविड् फ्राली, शतावधानी आर्. गणेशः, एन्. एस्. राजाराम्, सन्देशस्य विषयपरामर्शकः गोपालकण्णन् इत्यादयः ।*




**कृशतासम्पादनार्थं मया किं किं न कृतम् ? अन्ततो गत्वा अपि परिणामः कः ?**



कन्नडमूलम् - डा ।। ज्योत्स्ना के. कामत
अनुवादः - विद्याधरः

# कृशतासम्पादनार्थम् .....

''कृशकायत्वं सम्पादयतु, शरीरस्य भारं न्यूनीकरोतु'' - बहवः मम हितैषिणः मां दृष्ट्वा एतत् उपदेशवचनं वर्षन्ति स्म । ''भवतु नाम..... का हानिः ?'' इति वदन्ती अहं तद्विषये निरासक्तिम् एव प्रदर्शयामि स्म ।

समाजस्य स्वभावः एव एषः । यदि कश्चित् उन्नतः अस्ति तर्हि तं सः 'घटोत्कचः' इति वा, 'कुम्भकर्णः' इति वा वदति । यदि वामनः अस्ति तर्हि अपि अपवादः अस्ति एव । यदि काचित् स्थूला अस्ति तर्हि सा 'गजलक्ष्मीः' इति उच्यते, यदि 'कृशा' तर्हि 'विद्युल्लता' इति उच्यते । कृष्णवर्णा चेत् काकी इति, श्वेतवर्णा चेत् बकी इति नामकरणं भवत्येव । जननात् पूर्वमेव 'मदीयानि अङ्गानि एतादृशानि एव भवेयुः' इति निर्णेतुं वयमेव शक्नुमः किम् .....?

स्थूलकायां मां प्रतिदिनं ये पश्यन्ति तेषां मुखात् अनन्ताः वाग्बाणाः निस्सरन्ति । ''प्रातः एव गज-दर्शनं सञ्जातम् , अद्य आरब्धं कार्यं न सिध्यति'' - प्रतिवेशिन्याः वचनम् इदम् । ''अस्मिन् अपि दुर्भिक्षकाले एषा 'महामाता' किं खादित्वा एवं प्रवृद्धा स्यात्..... ?'' - अन्या काचित् आश्चर्यं प्रकटितवती । अपरा काचित् महाविद्यालयच्छात्रा स्वसखीः वदति स्म - ''पत्रिकासु यानि व्यङ्ग्यचित्राणि पश्यामः तानि प्रायः एतां दृष्ट्वा एव लिखन्ति चित्रकाराः'' इति ।

लोकयानेन प्रयाणसमये तु महत् कष्टम् अनुभूयते स्म । द्वाभ्याम् उपवेशनयोग्ये आसने यदि अहम् उपविष्टा भवामि तर्हि मम पार्श्वे उपवेष्टुम् अन्या कापि न उत्सहते । त्रिचक्रिकाचालकास्तु मया सह अन्येन अन्यया वा प्रयाणं करणीयम् अस्ति चेत् तदर्थम् अपरा एव त्रिचक्रिका अपेक्षिता इति वदन्ति ।

एतेन खिन्ना सती अहं कदाचित् पतिं पृष्टवती - ''मम स्थूलतायाः कारणं किं, स्यात् ? केन प्रकारेण एतस्याः निवारणं भवेत् ?'' इति ।

''किमर्थं वृथा चिन्तयति भवती.....? एकैकस्यापि शरीरप्रकृतिः भिन्ना भवति । तदनुसारं स्थौल्यं कार्श्यं च सम्भवति । स्वस्था तु अस्ति खलु भवती .....? पुनः का चिन्ता .....? कृशकायत्वं प्राप्य किं भवत्या भरतनाट्यं करणीयम् अस्ति .....?'' - सः मम समाधानं कृतवान् । पत्युः सान्त्वनवचनानि श्रुत्वा अहं किञ्चिदिव समाहिता ।

अनन्तरं नन्दगोकुलस्य गोपिकाः इव दुग्धं, दधि, नवनीतं, घृतं च सेवमाना सुखेन कालं यापयन्ती आसम् । कदाचित् अकस्मात् महती पादवेदना आरब्धा । शीघ्रमेव वैद्यसमीपं गतम् । ''शरीरे मेधसः अंशः अधिकः जातः अस्ति । इदानीं तु औषधं ददामि । परन्तु शाश्वतपरिहारार्थं भवत्या शरीरस्य भारः न्यूनीकरणीयः एव'' इति सः वैद्यः मां सूचितवान् । 'तदर्थं कः मार्गः' इति

चिन्तयितुम् आरब्धवती ।

काचित् वैद्या प्रकृतिचिकित्सया शरीरभारस्य न्यूनीकरणे निपुणा अस्ति इति वार्ता श्रुता । मासत्रयं यावत् चिकित्सां प्राप्तुं तस्याः प्रकृतिचिकित्साकेन्द्रं गतवती अहम् । तत्र तु प्रातः चतुर्वादने एव उत्थानम् ! अनन्तरं वनौषधिनिर्मित-कषायपानम् ! तत्पश्चात् स्वेदोत्पत्तिपर्यन्तम् अपि सामूहिक-सर्वाङ्गसुन्दरव्यायामः करणीयः ! उपाहारस्तु अतिविशिष्टः ..... तण्डुलेन निर्मिता यवागूः, तप्ताङ्गारे दग्धाः (भ्रष्टाः) पर्पटाश्च ! उपाहारानन्तरं तु समुद्रतीरे निर्मिते गर्ते कण्ठपर्यन्तं स्वशरीरं संस्थाप्य उपवेष्टव्यम् । एकत्र क्षुत्पीडा, अपरत्र आतपबाधा ....! 'कदा वा इतः मोक्षः ...?' इति प्रतिक्षणं चिन्ता भवति स्म ।

मध्याह्नभोजनार्थं तु सूर्यातपे एव पक्वम् ओदनम्, कटुलवणविरहितं शाकम्, जलमयं तक्रं च । अपराह्ने तिलोदकमेव पानीयम् ! रात्रौ भोजनार्थं चषकपरिमितं मेधोरहितं रुचिरहितं च गोक्षीरम् । दीयमानः आहारः एव तावान् अल्पः, सोऽपि अतीव नीरसः । अतः तस्य अर्धभागोऽपि उदरं न प्रविशति स्म । सप्ताहद्वयाभ्यन्तरे एव गजसदृशं मम शरीरम् अजसदृशं सञ्जातम् । अनुक्षणम् आर्यपुत्राय पत्रमेकं लिखितवती - "यदि इतोऽपि एकसप्ताहं यावत् अत्रैव स्थास्यामि तर्हि मम मरणं निश्चितम् । मरणात् पूर्वं द्वित्राणि वा दिनानि भवता सह स्थातुं भोक्तुं, जीवितुं च इच्छामि" इति । पत्रप्राप्तिसमनन्तरम् एव धावन् आगतः मम पतिः ततः मम बन्धविमोक्षं कारितवान् !

"इदानीं कृशा जाता अस्मि । जनाः मां निश्चयेन श्लाघन्ते" इति चिन्तितवती आसम् ।



परन्तु अधुना जनानां प्रतिक्रिया अन्या एव ! "किं भोः ....किमर्थम् एवं कृशा सञ्जाता भवती ...? अस्वास्थ्यं किम् .....?" इति काचित् पृष्टवती । "किं भोः ....बहुदिनेभ्यः न दृष्टा एव..... डि. अण्ड् सि. शस्त्रक्रियां कारितवती किम् ?" - इति अन्यस्याः प्रश्नः । बहवः 'अहो हन्त...' इति वदन्तः करुणापूर्णया दृष्ट्या मां पश्यन्ति स्म ।

एवमेव कानिचित् दिनानि अतीतानि । अत्रान्तरे कदाचित् "मम नूतनगृहप्रवेशार्थम् आगच्छतु" इति निमन्त्रणं कृतवती प्रतिवेशिनी सुनन्दम्मा । कमपि व्याजम् उक्त्वा न गतवती अहम् । परन्तु सा पुनरपि गृहम् आगत्य मां बलात् नीतवती एव । 'मिष्टान्नं -पोलिका - इत्यादीनि खाद्यानि बलात् भोजितवती अपि । अन्या प्रतिवेशिनी कविता स्वपुत्रस्य अन्नप्राशनसमारम्भार्थं मां नीत्वा बलात् अनेकानि खाद्यानि भोजितवती । अनन्तरदिने एव अमितायाः गृहं गत्वा मिष्टान्नानि खादनीयानि अभवन् । सर्वेषाम् अनुरोधस्य कारणतः प्रकृतिचिकित्सां स्मरन्ती अपि अहं मिष्टान्नानि खादितवती । सप्ताहाभ्यन्तरे एव मम शरीरं यथापूर्वं स्वकीयं गजगात्रत्वं प्राप्नोत् !

अत्रान्तरे कस्याश्चित् पत्रिकायां प्रकाशितं स्वास्थ्यविषयकं लेखम् एकम् अहं पठितवती । मेधसः कारणतः के के दोषाः सम्भवन्ति इति तत्र विस्तरेण लिखितम् आसीत् । रक्तनाडीषु मेधः सङ्गृहीतं भवति चेत् हृदयं कथं दुर्बलं भवति इत्यपि तत्र सचित्रं विवरणम् आसीत् । लेखं पठित्वा भीता अहं 'यावदपि कष्टं भवतु, शरीरे मेधसः अंशः न्यूनीकरणीयः एव' इति दृढं निश्चितवती ।

परन्तु पुनः प्रकृतिचिकित्साकेन्द्रं गन्तुं धैर्यं न आसीत् । अतः इदानीं नियुद्धम् (कराटे) अभ्यसितुं निर्णीतवती । तदर्थम् अपेक्षितं समवस्त्रं धृत्वा नियुद्धकक्ष्यां गतवती । तत्र तु



मम सहाध्यायिनः सर्वे अपि युवतियुवकाः एव । अहमेका एव मध्यवयस्का । यथा यथा शिक्षकः 'एकं, द्वे, त्रीणि.....' इति संख्याः वदति तथा तथा छात्राः कूर्दन्ति स्म । तावता वेगेन कूर्दितुम् अहं तु न शक्ता । सहजतया दोषं करोमि स्म । यदा अहं दोषं करोमि स्म, तदा पश्चषाः मम समीपम् आगत्य ''पितामहि....मातामहि....'' इति मां सम्बोधयन्तः पाठयितुम् उद्युक्ताः भवन्ति स्म । तेषां मुखतः तादृशं सम्बोधनं श्रोतुम् अनिच्छन्ती अहं नियुद्धकक्ष्यामेव त्यक्तवती ।

पादाभ्यां चलनेन (walking) समस्या परिहृता भवति इति विचिन्त्य अहं तत् कर्तुं सज्जा जाता । तदर्थं प्रातः चतुर्वादने एव अहम् उत्थितवती । परन्तु काफीपानं विना बहिः गमनं कथम्.....? क्षीरागमनस्य प्रतीक्षां कृत्वा, तदनन्तरं काफी सज्जीकृत्य, पीत्वा, अन्यानि कार्याणि समाप्य यदा बहिः आगतवती तावता एव सूर्यातपः आगतः आसीत् । किञ्चिद्दूरगमनेन एव अहं श्रान्ता अभवम् । महता प्रयत्नेन द्वित्राणि दिनानि एवं चलितवती । चतुर्थे दिने उत्थातुम् एव न शक्ता अहम् । अनन्तरं पादाभ्यां चलनं समाप्तमेव !

कृशतासम्पादनस्य सर्वेऽपि उपायाः 'निष्फलाः जाताः इति खेदेन अन्ततो गत्वा अहं पतिमेव शरणं गता । ''निश्चयेन भवतः सर्वाः सूचनाः पालयामि'' - इति तम् उक्तवती च । सोऽपि झटिति कार्यप्रवृत्तः जातः । ''गृहे एव व्यायामं करोतु''- इति सूचितवान् । खादीभण्डारतः नूतनं वस्त्रकटं क्रीत्वा आनीतवान् । व्यायामनिमित्तं नूतनानि उपकरणानि आनीतानि । तानि सर्वाणि गृहे एकस्मिन् प्रकोष्ठे संस्थापितानि । व्यायामसम्बन्धीनि अनेकानि चित्राणि भित्तौ संस्थापितानि । तानि पश्यन्ती अहं व्यायामम् आरब्धवती । किन्तु पञ्चनिमेषाभ्यन्तरे एव हस्तस्य स्नायुवितननं (sprain) सञ्जातम् ! 'अयोडेक्स्' लेपयित्वा सान्त्वनं कृतवान् आर्यपुत्रः । पुनः किञ्चित्कालानन्तरं पादवेदना आरब्धा । अस्थिभङ्गः जातः इव अनुभवः । ज्वरः अपि आरब्धः । तस्य शमनार्थं सप्ताहात्मकः कालः आवश्यकः अभवत् ।

'एषः अपि उपायः असफलः जातः । मिताहारसेवनम् एव अत्र परमम् औषधम्' इति अहं निर्णीतवती इदानीम् । 'तैलखाद्यं किमपि न करणीयम्' इति सुग्रीवाज्ञां कृतवान् आर्यपुत्रः । केवलं प्रत्यग्रं गृञ्जनकं, मूलकम्, उर्वारुकं च खादितुम् आरब्धवती । 'तण्डुलस्य उपयोगः निषिद्धः, गोधूमस्य एव उपयोगः' इति निर्णीतम् । मयि उत्साहं जनयितुं, मम सहयोगं दातुं च इच्छन् आर्यपुत्रः अपि तमेव आहारं स्वीकरोति स्म ।

दिनद्वयाभ्यन्तरे एव एतादृशस्य पथ्याहारस्य सेवनेन मुखे अरुचिः उत्पन्ना । 'रुचिकरं भोजनं कदा वा लभ्येत' इति मनः चिन्तयति स्म । पुनरपि एकं दिनं महता कष्टेन यापितम् । चतुर्थे दिने एव द्वौ अपि मिलित्वा नलपाकं सज्जीकृतवन्तौ । सर्वाः चिन्ताः विस्मृत्य आनन्देन मृष्टान्नभोजनं कृतवन्तौ । भोजनानन्तरम् आर्यपुत्रः माम् उक्तवान् - ''यथा भवती जीवने मम सहचरी तथा मेधः भवत्याः सहचरम् । तस्य दूरीकरणं तु सर्वथा न शक्यम् । तेन सहैव सहजीवनम् अभ्यस्यतु । 'नान्यः पन्थाः विद्यते अयनाय' इति ।

इदानीं तस्य एव अभ्यासं कुर्वती अस्मि !

# प्रवेशोत्सववार्ता

- वार्ताहरः

"अजितश्रीः"
- हिन्दुसेवाप्रतिष्ठानस्य प्रधानकार्यालयस्य नाम एतत् । प्रतिष्ठानस्य संस्थापकनिर्देशकस्य दिवङ्गतस्य अजितकुमारस्य स्मारकरूपेण निर्मितम् एतत् कार्यालयभवनं गतमासे लोकाय अर्पितम् । अजितश्री-प्रवेशोत्सवस्य वृत्तम् अत्र अस्ति ।

"भगवता श्रीकृष्णेन दर्शितं सेवामार्गम् अनुसृत्य सर्वे अपि देशोत्थानकार्ये प्रवृत्ताः भवेयुः, तदा एव देशस्य उन्नतिः भविष्यति" इति पेजावरमठाधीशाः हिन्दुसेवाप्रतिष्ठानस्य कुलपतयः श्रीविश्वेशतीर्थस्वामिनः उक्तवन्तः ।

बेङ्गलूरुनगरे फेब्रवरी ९ दिनाङ्के बसवनगुडिमार्गे नूतनतया निर्मितस्य हिन्दुसेवाप्रतिष्ठानस्य प्रधानकार्यालयस्य 'अजितश्री'-भवनस्य प्रवेशोत्सवसन्दर्भे सार्वजनिकसमारम्भे अध्यक्षस्थानात् ते भाषमाणाः आसन् ।

पूज्यस्वामिनः हिन्दुसेवाप्रतिष्ठानस्य संस्थापकस्य दिवङ्गतस्य अजितकुमारमहोदयस्य सेवादर्शस्य श्लाघनं कुर्वन्तः - "अजितकुमारः असंख्याकान् युवतियुवकान् सेवादीक्षितान् कृतवान् । ततः अद्वितीयां कार्यसिद्धिं प्राप्तवान् । तेन प्रज्वालितं सेवाज्योतिः इदानीम् अतिशयेन प्रकाशमानम् अस्ति । राष्ट्रसेवायै स्वजीवनसमर्पणेन दिवङ्गतः अपि अजितकुमारः चिरञ्जीवित्वं प्राप्तवान् अस्ति । तस्य स्मारकम् इदं भवनं राष्ट्रस्य सर्वेषां युवतियुवकानां स्फूर्ति-प्रेरणाकेन्द्रं भवतु" इति आशयं प्रकटितवन्तः ।

राष्ट्रियस्वयंसेवकसङ्घस्य सरकार्यवाहः श्री हो. वे. शेषाद्रिमहोदयः मुख्यभाषणं कुर्वन् - "हिन्दुसमाजविषये अस्माकं दृढः विश्वासः भवेत् । इदानीन्तनपरिस्थितिं दृष्ट्वा अस्माभिः निराशैः न भवितव्यम् । हिन्दुसमाजे अन्तःसत्त्वं प्रतिदिनं वर्धमानम् अस्ति ।" इति उक्तवान् ।

प्रतिष्ठानस्य संस्कृतप्रचारकार्यम् उल्लिखन् सः "संस्कृतसम्भाषणद्वारा सामाजिक-परिवर्तनम् आनेतुं प्रयत्नं कुर्वतः संस्कृतविभागतः प्राप्तप्रेरणाः अनेके सेवाव्रतिनः, सहस्राधिकाः कार्यकर्तारः देशस्य कोणे कोणे संस्कृतसम्भाषणं पाठयन्तः समाजपरिवर्तनकार्ये निरताः सन्ति" इति उक्तवान् । अन्यच्च "सुप्तरीत्या विद्यमानायाः स्त्रीशक्तेः जागरणम् अपि हिन्दुसेवाप्रतिष्ठानेन क्रियमाणम् अस्ति । अनेकाः युवतयः 'समाजकार्यं करणीयम्' इति बुद्ध्या सेवाव्रतं स्वीकृत्य सेवाव्रतिनीरूपेण कार्यं कुर्वत्यः सन्ति इत्येतदेव तस्य निदर्शनम्" इत्यपि सः उक्तवान् ।

अभ्यागता दिल्लीनगरस्य सामाजिक-कार्यकर्त्री श्रीमती राजकुमारी-अगर्वाल् कर्णाटके सेवाव्रतिभिः उपेक्षितक्षेत्रेषु क्रियमाणं कार्यं ज्ञात्वा प्रभाविता सती तान् प्रशंसितवती ।

"यथा दहनम् अग्नेः धर्मः, शोषणं वायोः धर्मः तथैव सेवा मानवस्य धर्मः अस्ति । मानवजीवनं सेवार्थं समर्पितं भवेत् । मानवस्य धनं, बुद्धिः सामर्थ्यं सर्वम् अपि समाजाय समर्पितं भवेत्" इति सा स्वाभिप्रायं प्रकटितवती ।

कार्यक्रमस्य आरम्भे प्रेमलतादिवाकर्, अन्याः च स्वागतगीतं गीतवत्यः । 'अजितश्री' प्रवेशोत्सवसमितेः अध्यक्षः कर्णाटक-उच्चन्यायालयस्य भूतपूर्वः मुख्यन्यायाधीशः श्री डि. एं. चन्द्रशेखरः अतिथीन् स्वागतीकृत्य तान् परिचायितवान् । प्रतिष्ठानस्य निर्देशकः श्री दिनेशकामतः प्रास्ताविकभाषणं कुर्वन् - 'सेवा वृत्तिः न, व्रतं भवेत्' इति महता उद्देशेन अजितकुमारः हिन्दुसेवाप्रतिष्ठानं संस्थापितवान् । एतेषु पञ्चदशवर्षेषु द्विसहस्राधिकाः सेवाव्रतिनः प्रशिक्षणं प्राप्तवन्तः । तेषु १८०० महिलाः एव । इदानीम् कर्णाटके, तमिलुनाडुराज्ये, आन्ध्रप्रदेशे, केरले, बिहारे, उत्तरप्रदेशे, देहल्याम्, अरुणाचलप्रदेशे च सेवाव्रतिनः सन्ति" इति उक्तवान् ।

"एतस्य प्रवेशोत्सवस्य पूर्वभाविरूपेण बेङ्गलूरुनगरे विविधस्थानेषु संस्कृतसम्भाषण-शिबिराणि, गृहवैद्य-शिबिराणि, उपन्यास-कार्यक्रमाः च प्रवृत्ताः । एतेषु सहस्राधिकजनाः भागं गृहीतवन्तः" इति वृत्तं सः निवेदितवान् ।

अत्यन्तं सुव्यवस्थितरूपेण प्रवृत्ते एतस्मिन् सार्वजनिकसमारम्भे द्विसहस्राधिकाः जनाः सोत्साहं भागं गृहीतवन्तः । प्रतिष्ठानस्य सर्वविधानाम् अपि योजनानां परिचायकाः सांस्कृतिककार्यक्रमाः सभायां प्रदर्शिताः ।

बेङ्गलूरुनगरस्य अतीव प्रसिद्धस्य बसवनगुडिमार्गस्य पार्श्वे विद्यमाना काचित् भूमिः सीता-रुक्मिणी-नामिकाभ्यां भगिनीभ्यां प्रतिष्ठानाय दानरूपेण दत्ता आसीत् । कार्यकर्तॄणां परिश्रमेण समाजस्य साहाय्येन च तत्र महत् भवनं निर्मितम् । बेङ्गलूरुनगरस्य अनेके गण्याः नागरिकाश्च प्रवेशोत्सवस्य स्वागतसमितेः कार्यकर्तृत्वेन अहर्निशं कार्यं कृतवन्तः इति कारणतः अल्पेन एव कालेन भवननिर्माणं शक्यम् अभवत् । ◆

### सुशीलगृहप्रशस्तिः

प्रतिष्ठानस्य नूतनयोजना एषा । परम्परात्रयस्य जनाः अविभक्ताः सन्तः यस्मिन् कुटुम्बें वासं कुर्वन्ति, यस्मिन् गृहे नित्यव्यवहारे संस्कृतिः जीवन्ती भवति, यत् समग्रकुटुम्बमेव समाजसेवातत्परं क्रियाशीलं च अस्ति तस्मै गृहाय "सुशीलगृहप्रशस्तिः" इति काचित् प्रशस्तिः प्रतिष्ठानेन दीयते । एषा प्रशस्तिः दशसहस्ररूप्यकात्मिका अस्ति । एतस्मिन् वर्षे तादृशीं विशिष्टां प्रशस्तिं कासरगोडुतालूक् मङ्गलपाडिहिन्तलमने मध्ये विद्यमानौ बालकृष्णदम्पती प्राप्तवन्तौ । अजितश्री-प्रवेशोत्सवसन्दर्भे एतत् प्रशस्ति-प्रदानं प्राचलत् ।

# वार्ताः

## प्रोद्दटूरुनगरे संस्कृतोत्सवः

आन्ध्रप्रदेशस्य प्रोद्दटूरुनगरे पञ्चमः संस्कृतोत्सवः स्थानीयायाः काकतीय-कलाशालायाः प्राङ्गणे फरवरी तृतीये दिनाङ्के सवैभवं सम्पन्नः । नगरस्य विविधविद्यालयेभ्यः समागताः संस्कृतच्छात्राः अध्यापकाः च उत्सवे भागम् अवहन् ।

कार्यक्रमस्य मुख्यातिथयः श्री श्री त्रिदण्डिरामानुजजीयर्स्वामिचरणाः संस्कृतस्य सार्वजनिकत्वं सार्वकालिकत्वं च वाल्मीकिरामायणोद्धारपुरस्सरं निरूपितवन्तः । स्मरणसञ्चिकायाः अनावरणम् अपि तैः कृतम् । आरम्भे काकतीयकलाशालायाः सञ्चालिका श्रीमती आर्. उमा मुरलीधरमहाभागा द्वीपज्वालनपूर्वकं कार्यक्रमस्य शुभारम्भं कृतवती आसीत् । अन्ते विजेतृभ्यः छात्रेभ्यः पुरस्कारान् अपि सा वितीर्णवती । कलाशालायाः प्राचार्यः श्री जि. सिद्धारेड्डिः अध्यक्षभाषणं कृतवान् ।

## श्री राजीवगान्धि-केन्द्रीय-संस्कृतविद्यापीठस्य वार्षिकोत्सवः

श्रीराजीवगान्धिकेन्द्रीयसंस्कृतविद्यापीठस्य चतुर्थ-वार्षिकोत्सवः १-२-९६ दिनाङ्के शृङ्गगिरौ सवैभवं प्राचलत् ।

वार्षिकोत्सवकार्यक्रमस्य अध्यक्षपदं 'कालटि'-स्थस्य श्री शङ्कराचार्यसंस्कृत-विश्वविद्यालयस्य 'कोयिलाण्डि'केन्द्रनिर्देशकः प्रो. रामकृष्ण-भट्टः अलङ्कृतवान् । राष्ट्रियसंस्कृत-संस्थानस्य निर्देशकः डा. कमलाकान्तमिश्र-महाभागः मुख्यातिथिः आसीत् । प्रशिक्षणविभागस्य वरिष्ठव्याख्याता डा. वि. मुरलीधरशर्मा कार्यक्रमे समागतेभ्यः सर्वेभ्यः स्वागतं व्याहृतवान् । विद्यापीठस्य प्राचार्यः डा. दामोदरशास्त्रिमहाभागः वार्षिकप्रतिवेदनं प्रस्तुतीकुर्वन् विद्यापीठीयानां शैक्षणिक-क्रियाकलापानां विवरणं कृतवान् ।

डा. कमलाकान्तमिश्रः वार्षिकोत्सवप्रसङ्गे सञ्चालितासु विभिन्नशैक्षणिकं-क्रीडा-प्रतियोगितासु विजेतॄन् छात्रान् पुरस्कारप्रमाणपत्रदानेन पुरस्कृतवान् । अस्मिन् प्रसङ्गे संस्थानेन सञ्चालितायां शिक्षाशास्त्रि-कक्ष्यायाः (१९९४-९५) वार्षिकपरीक्षायां सर्वाधिकाङ्कान् प्राप्तवान् श्री महेश काकत्करः, प्रतियोगितासु सर्वाधिक-पुरस्कारान् प्राप्तवन्तौ कु. शारदा, तथा बालकृष्णः, विभिन्नकक्ष्याणां वार्षिकपरीक्षायां सर्वाधिकाङ्कान् प्राप्तवन्तः सप्त च्छात्राः च विशेषपुरस्कारैः पुरस्कृताः ।

अन्ते विद्यापीठीयच्छात्रैः प्रहसनानि अभिनीतानि, 'धीवरगानं' नामकं नृत्यं च अभिनीतम् ।

प्रशिक्षणविभागाध्यक्षेण डा. परमेश्वर नारायणशास्त्रिणा कृतेन धन्यवादसमर्पणेन समारोहोऽयं समाप्तः अभवत् ।

## संस्कृतसम्भाषणम् अत्यावश्यकम्

– डा. शत्रुघ्नप्रसादसिंहः

"इदानीं भारते पाश्चात्यसंस्कृतेः आक्रमणेन सञ्जातस्य दुष्परिणामस्य निवारणार्थं, तस्य सम्मुखीकरणार्थं च संस्कृतसम्भाषणम् अत्यावश्यकम् । एकस्मिन् पार्श्वे आङ्ग्लसंस्कृतितः प्रभाविताः जनाः, अन्यस्मिन् पार्श्वे भारतीयसंस्कृतेः पुनरुज्जीवनं कर्तुं प्रयतमानाः जनाः एतयोः द्वयोः मध्ये सङ्घर्षः भविष्यति । तत्र निश्चयेन जयः भारतीयसंस्कृतेः एव भवति । तस्य लक्ष्यस्य प्राप्तौ संस्कृतसम्भाषण-आन्दोलनं निश्चयेन एकं श्लाघनीयं पदम् अस्ति" इति मध्यबिहारप्रान्तस्य प्रान्तसङ्घचालकः डा. शत्रुघ्नप्रसादसिंहः उक्तवान् । सः अत्रत्ये राष्ट्रिय-स्वयं-सेवकसङ्घस्य कार्यालये विजयनिकेतने प्रवृत्ते संस्कृतसम्भाषण-शिबिरस्य समारोपकार्यक्रमे भाषमाणः आसीत् ।

मुख्यातिथिस्थानतः भाषमाणा प्रसिद्धा संस्कृतविदुषी डॉ॰ मिथिलेशकुमारी मिश्रा उक्तवती यत् "संस्कृतसम्भाषणम् अतीव सरलम् । सम्भाषणस्य आरम्भे दोषः सहजः । शुद्धं वा अशुद्धं वा संस्कृतं वदतु । संस्कृतसम्भाषणशीलता अपेक्षिता । तदा एव संस्कृतस्य पुनरुज्जीवनं साध्यम्" इति ।

## कलियुगीयः कर्णः

*अपघातात् व्रणितः आसन्नमरणः कश्चित् तरुणः स्वस्य षण्णाम् अङ्गानां दानं कुर्वन् 'कलियुगकर्णः' इति ख्यातिं प्राप्तवान् आसीत् ।*




*एतस्य मरणस्य अनन्तरं वैद्याः एतदीयं हृदयं, मूत्रकोषद्वयं, पित्तजनकाङ्गं (लिवर्) नेत्रद्वयं च स्वीकृतवन्तः । ४४ वर्षीयः कश्चन जनः एतदीयं हृदयं प्राप्य पुनरुज्जीवनं प्राप्तवान् । काचित् महिला, कश्चन पुरुषः च एतदीयम् एकैकं मूत्रकोषं प्राप्य स्वास्थ्यं प्राप्तवन्तौ । पित्तजनकाङ्गप्राप्त्या चतुर्दशवर्षीयः कश्चन तरुणः पुनर्जन्म प्राप्तवान् । एतदीये नेत्रे चिकित्सालये सुरक्षिततया स्थापिते स्तः । योग्यं पात्रं यदा प्राप्यते तदा तयोः दानं करिष्यते ।*

*एषा घटना मद्रासनगरे प्रवृत्ता । अङ्गानां दातुः नाम गोप्यतया स्थापितम् अस्ति चिकित्सालयेन ।*

**Statement about ownership of**
**Sambhashana Sandeshah (Samskrit)**
**Rule - 8 (From VI), News Papers (Central) Rules, 1956**

| | | |
|---|---|---|
| 1. | Place of Publication | 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085 |
| 2. | Periodicity of Publication | Monthly |
| 3. | Printer's Name | K. Narayana |
| | Nationality | Indian |
| | Address | 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085 |
| 4. | Publisher's Name | K. Narayana |
| | Nationality | Indian |
| | Address | 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085 |
| 5. | Editor's Name | Janardana Hegde |
| | Nationality | Indian |
| | Address | 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085 |
| 6. | Owner's name | K. Narayana |
| | Address | 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085 |

I, K. Narayana, hereby declare that the particulars given above are true to the best of my knowledge and belief.

1st March 1996

**K. NARAYANA**
Signature of the Publisher

शिबिरशिक्षकः डॉ॰ रघुरामभट्टः इतिवृत्तनिवेदनं कुर्वन् आन्दोलनस्य परिचयम् अपि कृतवान् । श्री अतुलमोहनः अतिथीनां स्वागतं कृतवान् । श्री शिवेन्द्रः धन्यवादज्ञापनं कृतवान् । श्री अरुण ओझा कार्यक्रमसञ्चालनं कृतवान् । शिबिरच्छात्राः संस्कृतेन विविधकार्यक्रमान् कृतवन्तः ।

## मणिपुरे संस्कृतसम्भाषणशिबिराणि

भारतदेशस्य अन्तिमभागे स्थिते मणिपुरराज्येऽपि १९९६ जनेवरी मासे संस्कृतभारत्याः कार्यकर्तृभिः संस्कृत-सम्भाषणशिबिराणि कृतानि । रमणीये पर्वत-नदीभिरावृते सेनापतिजनपदे चारहजार, उपरचारहजार, मध्यचारहजार, सुजोलावारी, पुखाउ, सेरौ, कांग्लातोम्बि-नामसु स्थानेषु चदुर्दश सम्भाषणशिबिराणि अभवन् । स्थानीय जनाः एतेषु शिबिरेषु सोत्साहं भागं स्वीकृत्य संस्कृतभाषा सुलभा, मधुरा, इति भावनां प्राप्तवन्तः । शिबिराणां समारोपसभासु संस्कृतभाषायां विविधान् कार्यक्रमान् कृत्वा संस्कृतपठनासक्तिं दर्शितवन्तः च । कमलप्रसादखतिवडा, नन्दकिशोरः, ठाकुरः च एतानि शिबिराणि सञ्चालितवन्तः ।

## संस्कृतशिक्षकाः सम्मानिताः

भारतीयसंस्कृत्यां गुरोः स्थानं सर्वोच्चं मन्यते । आध्यात्मिकक्षेत्रे भवतु, व्यावसायिकक्षेत्रे भवतु, सामाजिकक्षेत्रे वा भवतु गुरोः मार्गदर्शनं विना कोऽपि कार्यक्षमः भवितुं न अर्हति'' इति देहली-विधानसभाध्यक्षेण श्रीमता चरतीलालगोयल्-महोदयेन उक्तम् । सः दिल्ली-संस्कृत-अकाडेमीद्वारा आयोजिते संस्कृतसेवासम्मानन-समारोहे मुख्यातिथिरूपेण भाषमाणः आसीत् । ''भारतीयजीवनादर्शाः संस्कृते सन्ति इत्यतः एतेषां विचाराणां समाजं प्रति प्रापणं संस्कृतशिक्षकाणाम् उत्तरदायित्वम् अस्ति'' इत्यपि स्वीये भाषणे तेन उल्लिखितम् ।

एतस्मिन् कार्यक्रमे २३५ संस्कृतशिक्षकाः सम्मानिताः । सम्मानितेभ्यः सर्वेभ्यः शिक्षकेभ्यः स्मृतिचिह्नं, प्रशस्तिपत्रम्, अङ्गवस्त्रं च प्रदत्तम् ।

प्रसिद्धपत्रकारेण श्रीमता विश्वम्भरदत्त-शर्मणा कार्यक्रमस्य अध्यक्षस्थानम् अलङ्कृतम् आसीत् । संस्कृत-अकाडेमी-सचिवः श्री श्रीकृष्णसेमवालः कार्यक्रमस्य निर्वहणं कृतवान् ।

## राष्ट्रिय संस्कृतसंस्थानस्य निर्देशकः 'सन्देश'कार्यालये

राष्ट्रिय संस्कृतसंस्थानस्य निर्देशकः डॉ॰ कमलाकान्तमिश्रः फरवरीमासस्य अष्टादशे दिनाङ्के बेङ्गलूरुनगरे स्थितं सम्भाषणसन्देशकार्यालयम् आगतः आसीत् । हिन्दुसेवाप्रतिष्ठानस्य संस्कृतविभागस्य केन्द्रकार्यालये अक्षरे प्रचलन्ति संस्कृतकार्याणि दृष्ट्वा अतीव सन्तुष्टः सः तत्र कार्यं कुर्वतः कार्यकर्तॄन् अभिनन्दितवान् ।

अक्षरे एव स्थितं 'सम्भाषणसन्देश'- कार्यालयम् आगतेन तेन सन्देशविषये महान् सन्तोषः प्रकटीकृतः । ''संस्कृतभाषायाः प्रसारविषये भवद्भिः क्रियमाणं कार्यं सफलं भवतु'' इति सः कार्यकर्तॄणां शुभाशंसनं कृतवान् ।

## अन्धबालानां सम्भाषणशिबिरम्



गङ्गावतीनगरे विकलाङ्गानां पुनश्चेतनसंस्थायाः आश्रये जनवरीमासे अन्धबालानां निमित्तं संस्कृतसम्भाषणशिबिरम् एकम् आयोजितम् आसीत् । श्रीमती डि. जि. मठद कार्यक्रमस्य शुभारम्भे उपस्थिता आसीत् ।

२५ अन्धबालाः एतस्मिन् दशदिनसम्भाषणशिबिरे सोत्साहं भागं गृहीत्वा, सम्भाषणस्य अभ्यासं कृत्वा 'न वयम् अन्येभ्यः अवराः' इति प्रदर्शितवन्तः ।

जेसीभवने प्रवृत्ते शिबिरसमारोपकार्यक्रमे एते बालाः सम्भाषणप्रदर्शनं, कथावाचनम् इत्यादीन् बहून् कार्यक्रमान् कृत्वा प्रेक्षकान् विस्मितान् कृतवन्तः । दिवान अजितसिंहः अय्यनगौडः हनुमन्तप्पः च मुख्यातिथयः आसन् । ते सर्वे अपि अन्धबालानां प्रतिभां दृष्ट्वा आश्चर्यं प्रकटितवन्तः । वि. प्राणेशः स्वकीये अध्यक्षभाषणे अन्धबालानां निमित्तं शिबिरम् आयोजितवतः कार्यकर्तॄन् अभिनन्दितवान् । संस्कृतकार्यकर्ता विद्वान् गणपतिभट्टः एतस्य शिबिरस्य सञ्चालकः आसीत् ।

## संस्कृतभारती पञ्जीकृता

'संस्कृतभारती' धर्मार्थन्यासत्वेन (चारिटबल् ट्रस्ट् रूपेण) देहल्यां फरवरी २२ तमे दिनाङ्के पञ्जीकृता अभवत् । बहून् संस्कृतप्रेमिणः संस्कृतसंस्थाः च योजयन्ती एषा संस्कृतभारती संस्कृतस्य व्यवहारपथे आनयनं, सामाजिकपरिवर्तनस्य माध्यमरूपेण संस्कृतस्य प्रतिष्ठापनं च इत्येतेन उद्देशद्वयेन आरब्धा अस्ति । न्यासपत्रस्य लेखनं पञ्जीकरणं च इदं प्रथमतया संस्कृतभाषायाम् एव कृतम् अस्ति ।

भारतसंस्कृतपरिषद्, विश्वसंस्कृत-प्रतिष्ठानं, स्वाध्यायमण्डलं, बाबासाहेबआप्टे-स्मारकसमितिः, विद्याभारती, हिन्दुसेवा-प्रतिष्ठानम्, लोकभाषाप्रचारसमितिः - इत्यादयः शताधिकाः स्वयंसेवासंस्थाः संस्कृतस्य प्रचारप्रसारकार्ये सक्रियाः सन्ति । एतादृशसंस्थानां सहयोजनसमितिरूपेण संस्कृतभारती कार्यं करिष्यति ।

श्री मोरोपन्त पिङ्गले (नागपुरम्), श्री कृ. सूर्यनारायणरावः (मद्रास्), श्री अशोक सिंहलः (देहली), श्री लज्जाराम तोमरः (लखनऊ), श्री न. कृष्णप्पः (बेङ्गलूरु), श्री एस्. गुरुमूर्तिः (मद्रास्), श्री जयनारायण खण्डेलवालः (देहली), श्री जयप्रकाश अग्रवालः (देहली), श्री जि. पुल्लारेड्डिः (हैदराबाद्), श्री च.मू. कृष्णशास्त्री इत्येते एतस्य न्यासस्य न्यासिनः सन्ति । न्यासस्य पञ्जीकृतः कार्यालयः देहल्यां भविष्यति ।

एतस्मिन् एव सन्दर्भे एतदपि उल्लेखनीयम् अस्ति यत् संस्कृतसम्भाषणान्दोलनस्य महत्त्वं ज्ञात्वा तस्य प्रोत्साहनाय दिल्ली शासनेन अभियानप्रमुखः श्री च.मू. कृष्णशास्त्री सम्मानितः इति । फरवरी २० तमे दिनाङ्के दिल्लीसंस्कृतअकाडम्या समायोजिते कस्मिंश्चित् समारम्भे दिल्लीमुख्यमन्त्री श्री मदनलालखुरानः कृष्णशास्त्रिणे २१ सहस्त्ररूप्यकाणां धनराशिं समर्पितवान् । रा. स्व. सङ्घस्य सरसङ्घचालकः प्रो. राजेन्द्रसिंहः कार्यक्रमस्य अध्यक्षः आसीत् ।

## पूर्णप्रज्ञविद्यापीठे विचारगोष्ठी

फेब्रवरीमासस्य सप्तदशदिनाङ्कतः दिनत्रयं यावत् बेङ्गलूरुनगरस्थेन पूर्णप्रज्ञसंशोधनमन्दिरेण ''भारतीयदर्शनेषु प्रत्यक्षप्रमाणस्वरूपम्'' इतीमम् विषयम् अधिकृत्य विचारगोष्ठी आयोजिता आसीत् । श्री विद्यामान्यतीर्थानां, श्री विश्वप्रसन्नतीर्थानां च उपस्थितौ राष्ट्रियसंस्कृतसंस्थानस्य निर्देशकः श्री कमलाकान्तमिश्रः दीपज्वालन-पूर्वकम् एतस्याः गोष्ठ्याः उद्घाटनं कृतवान् ।

एतस्यां गोष्ठ्यां जैनसांख्यन्याय-द्वैताद्वैतविशिष्टाद्वैतदर्शनेषु प्रत्यक्षस्वरूपं, तत्प्रभेदं, तदुत्पत्तिप्रकारं च अधिकृत्य चर्चा प्राचलत् । न्यायदर्शनस्य निर्विकल्पकविषये अलौकिकसन्निकर्षे च सविमर्शं प्रबन्धाः मण्डिताः । द्वैतदर्शने स्मृतेः प्रत्यक्षत्वं, आत्मनः सप्तमेन्द्रियत्वं च विचारग्रासम् अगात् । द्वैतिनां अभिनवान्यथाख्यातिवादः सतर्कम् आक्षिप्तः, समाहितश्च । गोष्ठ्याम् आहत्य दश प्रबन्धाः मण्डिताः चर्चिताश्च ।

पेजावरमठाधीशाः श्री विश्वेश-तीर्थश्रीपादाः त्रिष्वपि दिनेषु गोष्ठीषु सक्रियं भागम् अगृह्णन् । पण्डितप्रवराः श्री वेम्पटि कुटुम्बशास्त्रिणः, श्री देवनाथाचार्यः, श्रीमती रेवती महाभागा एवम् अन्ये बेङ्गलूरुनगरवासिनः पण्डितप्रवराः गोष्ठीषु भागम् अवहन् । संस्थायाः गौरवनिर्देशकाः श्री प्रह्लादाचार्याः सर्वेभ्यः धन्यवादान् अर्पितवन्तः । ☐☐




पूर्णप्रज्ञसंशोधनमन्दिरे
प्रवृत्तायां विचारगोष्ठ्यां
भाषमाणाः
विद्यामान्यतीर्थाः ।
प्रो । के. टि. पाण्डुरङ्गि,
डॉ॰ कमलाकान्तमिश्रः,
विश्वेशतीर्थस्वामिनः,
विश्वप्रसन्नतीर्थस्वामिनः,
हयवदनपुराणिकः च
मञ्चे दृश्यन्ते



डा ।। वे. कुटुम्बशास्त्री
जनार्दनहेगडे (सन्देशसम्पादकः)
रामस्वामि-अय्यङ्गार्यः, श्रीमती इन्दिरम्मा
इत्येतैः सह अक्षरे डॉ॰ कमलाकान्तमिश्रः



सन्देशकार्यालये
कार्यकर्तॄन् सम्बोधयन्
डॉ॰ कमलाकान्तमिश्रः

No. L/NP/KRNU/475 SAMBHASHANA SANDESHAH (Samskrit Monthly) March - 1996 R.No. 58190/94

## संस्कृत-सम्भाषणस्य अभ्यासार्थम् अत्र सन्ति कानिचन पुस्तकानि ।
## सरलं निरूपणं, सरला भाषा च एतेषां वैशिष्ट्यम् ।
## कृतपरिश्रमैः प्राप्तानुभवैः कार्यकर्तृभिः सज्जीकृतानि सन्ति एतानि ।।
## विभिन्नाः विषयाः । विभिन्नस्तरीयाणां कृते विविधाः अभ्यासाः ।।

| शैक्षणिकानि - | रू. |
|---|---|
| संस्कृतव्यवहारसाहस्री (कन्नड-अर्थसहिता) | १५.०० |
| - " - (आङ्ग्ल-अर्थसहिता) | ७.०० |
| - " - (हिन्दी-अर्थसहिता) | १५.०० |
| कन्नडसंस्कृतकोषः (कन्नडलिपिः) | १५.०० |
| कन्नडसंस्कृतक्रियापदकोषः ( - " - ) | १५.०० |
| संस्कृतचित्रपदकोषः | २५.०० |
| अभ्यासपुस्तकम् | २०.०० |
| विभक्तिवल्लरी | २०.०० |
| शतृशानजन्तमञ्जरी | १८.०० |
| अभ्यासदर्शिनी | ३५.०० |
| सम्भाषणसोपानम् | ३०.०० |
| कालबोधिनी | १०.०० |
| णत्वणिजन्तम् | ७.०० |
| सन्देशसंस्कृतम् | १०.०० |
| संस्कृतगुणनकोष्टकम् | ५.०० |
| संस्कृतसुलेखावली | १५.०० |
| बालकेन्द्रम् | १२.०० |
| समासः | २०.०० |
| बालतोषिणी | २२.०० |
| ललितबोधिनी | १८.०० |

| अन्यानि पुस्तकानि - | | रू. |
|---|---|---|
| नवरूपकम् | | २०.०० |
| साक्षिशिला | (जानपदरूपकम्) | १०.०० |
| जागरूको भव | (वीथीनाटकम्) | ३.०० |
| सुगन्धः | (कथासङ्ग्रहः) | ६.०० |
| बालकथामाला | ( - " - ) | १२.०० |
| पञ्चतन्त्रकथाः | ( - " - ) | १०.०० |
| रसप्रश्नाः | | ५.०० |
| गीतसंस्कृतम् | | ४.०० |
| गेयसंस्कृतम् | | ५.०० |
| शिशुसंस्कृतम् | | ८.०० |
| सुभाषितरसः(कन्नडलिप्या, कन्नड-अर्थयुक्तः) | | ८.०० |
| संस्कारसुधा | ( - " - ) | १०.०० |
| मातृचेतन | (कन्नडभाषोपेतः) | १५.०० |
| मित्राय नमः | ( - " - ) | १५.०० |
| **ध्वनिमुद्रिकाः** | | |
| प्रयोगाः | (पुस्तकसहितम्) | ४०.०० |
| सम्भाषणसंस्कृतम् | ( - " - ) | ४०.०० |
| गीतसंस्कृतम् | | ३०.०० |
| शिशुसंस्कृतम् | | ३०.०० |
| श्रीकृष्णजननम् | (यक्षगानम्) | ३०.०० |
| संस्कृतोज्जीवनम् | (भाषणम्) | ३०.०० |
| रूपकसङ्ग्रहः | (वीडियो क्यासेट्) | १००.०० |

एतदतिरिच्य विविधानि संश्लेषकाणि (स्टिकर्स्), शुभाशयपत्राणि, भित्तिपत्राणि(कन्नडलिप्या) चापि उपलभ्यन्ते ।

**सूचना -** * पुस्तकानि V.P.P. द्वारा न प्रेष्यन्ते । ये पुस्तकानि क्रेतुम् इच्छन्ति ते धनं [पुस्तकमूल्यं + रिजिस्टर् व्ययं (६.००) च] पूर्वम् एव प्रेषयेयुः ।

*. ध्वनिमुद्रिकार्थं प्रेषणव्ययः - रू १५.००

* धनं "Pallava Prakashana" नाम्ना प्रेषणीयम् ।

सम्पर्कसङ्केतः

**पल्लव प्रकाशनम्**

'अक्षरम्' ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५ दूरभाषा - ०८० - ६६१३०५२

Printed, Published and Owned by K. Narayana, "Aksharam", 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085
Ph. : 6617276/6613052 Editor : Janardana Hegde Printed at : Span Print, Bangalore - 4 Ph. : 6628880